# उदयमाना तारा



यदि भवताम् परिचये कुटुम्बे परिसरे कोऽपि बाल्ये एव प्राप्तयशा: बाल: अस्ति चेत् कृपया तस्य/तस्या: विवरणं स्वसन्दर्भं दत्त्वा अस्मान् प्रति प्रेष्यताम्।

Young Achievers-RCM,
Chandamama India Ltd,
No:2 Ground Floor, Swathi Enclave, Amman koil street, Vadapalani, Chennai-26
(or)
online@chandamama.com

## युवतमा कलावती

**शैलेन्द्र:** तथ विनीता इति भटनागरदम्पत्यो: कन्या आरुषी भटनागर, 'गिनेस' विश्वविक्रमपुस्तके युवतमा कलावती इति अङ्कनं प्राप्नोत् । यदा सा केवलम् एकादशमासीया आसीत् तदा एव 'उज्जैनी' इत्यत्र कालिदासप्रबोधिन्यां ५२ स्वनिर्मीतचित्राणाम् एकलप्रदर्शनं सा अकरोत्। अधुना स्ववयस: अष्टमे वर्षे आरुष्या ३००० त: अधिकानि चित्राणि, १५०० त: अधिकानि प्रदर्शनानि कृतानि, ९ पारितोषिकानि प्राप्तानि, २३ सन्मानचिह्नानि च लब्धानि। एतावता तस्या: ४ कलाकृती: विक्रीता:। ''पोगो विस्मयकारी बाल:'' इति स्पर्धायां २००५ वर्षे तया युवतमस्य कलाकारस्य पारितोषिकं प्राप्तम्। भोपालनगरे राज्यस्तरियायां प्रतियोगितायां वयस: प्रथमे वर्षे तया प्रथमं पारितोषिकं प्राप्तम्। हैद्राबाद इत्यत्र ''बालकलामश्चे'' बालोत्सवनिमित्तम् आयोजितायां राष्ट्रीय स्पर्धायां तया सुवर्ण पदकं प्राप्तम्।

बालदिन समारोहे भारतस्य राष्ट्रपतिद्वारा तस्या: सन्माननम् अभवत्। केंद्रीयक्रमिकपुस्तके अपि आरुष्या: कथा प्रकाशिता अस्ति।

रेखाङ्कन-कला-संस्थानम्, भोपालद्वारा तस्या: चित्राणां विक्रयेण प्राप्तं धनं सा मुकबधिरछात्राणां साहायार्थम् उपयुङ्क्ते।

तस्या: समुउज्ज्वलभविष्यार्थं वयं आरुष्या: शुभं कामयामहै।

Grant in Aid provided by Rashtriya Sanskrit Sansthan Deemed University



July 2012 ₹25/-

*Founded by* **B. Nagi Reddi and Chakrapani**

**Editor & Publisher :**
Prashant Sharad Mulekar

**Associate Editors :**
R. Vaasugi, K. Raja Sekhara Raju

**Sub Editor :**
Patricia Pandian

**General Manager :**
Sowmya Bharadwaj

**Senior Artists:**
K.C. Sivasankaran (Sankar), Gandhi Ayya, P. Mahesh, Sandeep Solkar

**Artist :**
Venki

**Layout Designers :**
B. Thirumal, K. Narendra, N. Sivakumar

**Production In-charge :**
Prashant Pawar

**Circulation:**
circulation@chandamama.com

**Asst. Manager - Sales & Circulation:**
Subhankar Rej

**Sales Officer - Circulation :**
K. Ravishankar

**Advertisement :**
sales@chandamama.com

**Customer Help :**
Ph: 022 40786043
customerhelp@chandamama.com

**Head Office :**
**CHANDAMAMA INDIA LTD.,**
P.O.Box No:19407, Mumbai-400093
Phone +91 22 28312872 / 28311849
Email:chandamama@chandamama.com
Website : www.chandamama.com

Published, Printed and Owned by CHANDAMAMA INDIA LTD., Published and Printed on their behalf by Prashant Sharad Muleker Published at B-3, Cross Road 'B', MIDC, Andheri (East) Mumbai - 400093. Printed At :- Kala Jyothi Process Pvt. Ltd, S.No.185, Kondapur, R.R.District-500133, Andhra Pradesh. Editor :- Prashant Sharad Mulekar

S

# अन्तरङ्गम्

## चन्दमामा

Volume-3 July 2012 Issue-07

# कोलाहल: कोलाहल: कोलाहल: एव !

२०१२ तमवर्षस्य मध्यं प्राप्ता: वयम्। वर्षारम्भादपि अधुना स्थितौ विपरीतता दृश्यते। जागतिकस्तरे उद्योगच्युति:, कार्यराहित्यम् आर्थिकसङ्कटानि च दरीदृश्यन्ते। विशेषत: युरोपदेशे सर्व: अपि जन: तेन बाधित: जात:, सर्वेषां मनांसि अपि तेन विषण्णानि सन्ति। भारते अपि अनपेक्षिता आर्थिक्य: समस्या: विकराला:। डॉलर अपेक्षया रूप्यकमूल्यस्य निरन्तर: ऱ्हास: एव जायमान: अस्ति। प्रतिवस्तु वर्धमानया महार्हतया सामान्यजनस्य जीवनमपि कठिनतरं भवति। अस्मिन् कठिनकाले एव अस्माभि: अविचलितता धैर्यं च प्रदर्शनीये। ये खलु सङ्कटानपि उत्तरिष्यन्ति ते एव खलु भविनि काले सुखोपभोगाय अर्हा: भवन्ति।

विपत्तीनां सम्मुखीकरणे, प्राप्तपरिस्थितिं अविकृतचित्तेन तरणे के खलु अधिकसमर्था: भारतीयेभ्य: ऋते? यत: अस्मासु भारतीयापरंपराया: संस्कृते: च संस्कारा: दृढमूला: वर्तन्ते। 'चन्दमामा' इत्यत्र मासिकेषु कथामाध्यमेन इमानि मूल्यानि एव संवर्धयितुम् अस्माभि: प्रयत्न: कृत:।

पुनरपि अस्माकं जीवनशैल्या: परीक्षणमस्भाभि: करणीयम्। येन वयमपि ऋणचक्रे न पतेम। गतेषु केषुचित् वर्षेषु सरलां जीवनपद्धतिं विहाय अस्माभि: अपि व्ययशीलता आश्रिता यस्या: नियन्त्रणमस्भाभि: एव कर्तव्यम्। इयं वैयक्तिकस्तरे राष्ट्रीयस्तरे च नीति: अवलम्बनीया। ये स्वव्यये नियन्त्रणं कर्तुं धनसञ्चयं च कर्तुं समर्था: ते एव इमं कृच्छकालं विनाकष्टं तरितुं शक्नुवन्ति। देश: अस्मात् सङ्कटात् अधिकशक्त्या आत्मानं उद्धरेत् इति अस्माकं विश्वास:।

पूर्वतनसम्पादकीये यथा अस्माभि: स्पष्टीकृतम् तथा विविधकारणै: अस्माकं मासिकस्य मूल्यवर्धनम् अपरिहार्यम्। जायमानां धनहानिं दूरीकर्तुं तद् आवश्यकमेव। अस्माकं सहृदया: वाचका: अस्माकं निरूपायतां जानीयु: तथा च तदर्थं कृतां योजनां ज्ञात्वा अस्माभि: सह सहकुर्यु: इति आशास्महे।

*- सम्पादक:*





# वाचकानां पुटोऽयम्



**च**न्दामामा इत्यस्य ख्याति: राज्यस्य सीमातीता देशस्य सीमातीता परदेशमपि गता अस्ति। अहं जानामि एतद् यत: मम कन्या अपि च मम जामाता दुबईप्रान्ते अभियन्तारौ स्त:। तत्र मया ज्ञातं यत् वर्तमानपत्रविक्रेता अपि चन्दामामा इत्यस्य आवश्यकतानुसारं पूर्तताम् कुर्वन् बहु कठीनसमयम् अनुभवति। यदा कदा अपि वयं प्रते: कृते पृच्छाम: स: वदति स्म यत्''सर्वा: अपि प्रतय: विक्रीता:''इति। यद्यपि लक्षाधिका: तेलगुजना: दुबईस्था: तथापि चन्दामामा इत्यस्य प्रतय: बहुन्यूनत्वेन तत्र प्राप्यन्ते अत: कुटुम्बानि चन्दमामा इत्यस्य एकां प्रतिं सर्वे मिलित्वा पठन्ति। चन्दामामायां प्रत्येकं पर्णं महत्वपूर्णम्। न केवलं बाला: अपि तु ज्येष्ठा: औत्सुक्येन तद् पठन्ति। कृपया चित्रशीर्षकस्पर्धा प्रारभ्यताम्।

*- पुलिजल रविन्दर राव, हैद्राबादत:*

**अ**स्मिन् मासे चन्दामामा विलम्बेन आगता। यद्यपि विलम्ब: जात: तथापि प्राप्तायां सञ्चिकायां अपूर्व: आनन्द: अनुभूत:। चन्दामामाकथासंकलनार्थ कृतज्ञ: अस्मि । गतेषु षष्ठि-वर्षेषु चन्दामामा वाचकानां सन्तोषं जनयति। अपि च द्वादशभाषासु तस्य प्रकाशनं न सुलभम्। कथा: अथवा उदाहरणानि प्राय: एतस्य मासिकस्य कृते प्राणरूपानि एव। किन्तु सर्वभाषिकाणां वाचकानां मनांसि रञ्जयेत् तादृशस्य कथानकस्य अन्वेषणम् इति एव चन्दमामाया: यशस:सूत्रम्। परन्तु न क: अपि जानाति एतासां कथानां चयनप्रक्रियाम्। कथानां संकलनम् निर्दोषम्। अत: अहम् अभिनन्दामि संकलनप्रक्रियारतान् पूर्वतनजनान् अपि च इदानींतनान्।

*- डा. सिरी मिर्यालागुडा, नालगोडा*

**इ**दानीम् अहं वेदान् पठन्नस्मि। अहं चन्दमामा इत्यस्य मे मासस्य सञ्चिकां पठामि। सर्वा: कथा: मह्यं रोचन्ते। विशेषत: (ऋणं पीडाजननम्) (अलसतर:), अपि च (दातृत्व-अभ्यास:) एता: कथा: बहु रोचका:। अस्मिन् मासे प्रकशिता: सर्वा: पटकथा: शोभना:। सुडोकु पंक्तिषु अपि च सामान्यज्ञाने अधिकवैशिष्ट्यानि गुणीकर्तुम् अहं विज्ञापयामि। राक्षस: मुक्त: जात: इति कथा: विचारप्रोत्साहनकर्य: आसन्।

*- व्ही. आर् सुब्रमह्मण्यम्, विजयवाडा, आन्ध्रप्रदेश:*

**अ**हं चत्वारिंशत् वर्षेभ्य: चन्दामामां पठन्नस्मि। अस्मिन् मासे प्रसिद्धा: सर्वा: कथा: मह्यम् अरोचन्त बहु कालादनन्तरं युष्माभि: प्राणिकथा: प्रकाशिता: कृपया दासारी सुब्रमण्यम् अनेन टी. शम्भुदासनाम्ना पूर्वसंचिकासु लिखिता: कथा: प्रकाश्यन्ताम्।

पुनरेकवारं चन्दमामायां पुरातनकथा: दृष्ट्वा अतीव आनन्द: संजात:। ता: कथा: अतीव उत्कृष्टा: भवन्ति। तासु कथासु बालकानां कृते विविधानि उदात्तमूल्यानि अपि वर्तन्ते। एतानि पाण्डित्यरत्नानि सर्वेषु बालकेषु तथा प्रौढजनेषु प्रभावं कृतवत्य: तदर्थम् अहं धन्यवादान् वितरामि।

*- मोहनरुपा, तिरुपति*

**१९६७** त: अहं चन्दामामाया: वाचक: अस्मि। २०१२ वर्षस्य परिष्कृता: कथा: मह्यं बाल्यकालस्य स्मरणं कारितवत्य:। प्रत्येकं प्रति: मम कृते ज्ञानभाण्डारमेव। ता: सञ्चिका: इतोपि अस्मान् प्रभावयन्ति। चन्दमामा-मासिकेन पाठकानां कृते आदर्श: स्थापित: अस्ति।

*- सुनील: काळे, नाशिक, महाराष्ट्रम्*

**अ**हं द्वादशवर्षीया अस्मि पंचवर्षेभ्य: अहं नियतवाचक: अस्मि: सर्वा: चन्दमामाकथा: मह्यं रोचन्ते वेतालकथा: वीरबलकथा: च मह्यं रोचन्ते उदयमाना तारा मह्यमपि किमपि कर्तुं प्रेरयति।

*- ईशानी चेटर्जी, खडकपूर*

**म**म समीपे मे मासस्य सञ्चिका न आसीत्। अत: अहं बहु चिन्तिता आसम्। चन्दमामा पौर्णिमादिने अपि न जाने कुत्र लुप्ता? अन्ततो गत्वा प्रकाशमाना सा मह्यं बहु आनन्दं दत्तवती। प्रतिमासं इतोऽप्यधिका: स्पर्धा: आयोज्यन्ताम् इति विज्ञापना।

*- केशवन्, टुटिकोरिन्, तमिळनाडु*

**नि**त्यवाचक: अस्मि चन्दमामाया:। आंग्लभाषा-तेलुगु संस्कृतभाषासु प्रकाशिता: चन्दमामासञ्चिका: अहं नित्य पठामि। दशवर्षेभ्य: अहं बहु दु:खित: अस्मि यत् आङ्ग्लचन्दमामावाचका: 'शिथिलालयम' इत्यादि लोककथा-मालिका: या: अन्यभाषासु प्रकाशिता: ता: सर्वत्र न लभ्यन्ते।'गणेशकथा' इत्यादि पौराणिक-कथानां मालिका: अपि प्रादेशिकभाषावाचकानां कृते अपि न उपलब्धा: अहं प्रार्थये नम्रतया यत् चन्दमामा-मालिका: आंग्लभाषायामपि प्रकाशयितव्या:। अन्यप्रादेशिकभाषाभि: सह पौराणिक-कथानां मालिका: अपि प्रकाशयितव्या:।

*- पी. व्ही. श्रीनिवास राव, हैद्राबाद*

# मम स्मृतय: - तेलुगु

सप्तचतुर्नवैकतमे वर्षे अहं विजयनगरे तृतीयकक्षायां पठन्नासम्। तदा प्रतिसायं कप्पास्थिते पठनकक्षे उपविश्य विविधमासिकानि पठामि स्म। ऑगस्टमासे स्वातंत्र्यं प्राप्स्यते इति विचारेण सर्वे उन्मनस: आसन्। तथा च सर्वत्र चन्दमामा मासिकस्य विषये जनप्रवाद: आसीत्। मासिकस्य विषये तस्य चित्राणाम् उदाहरणानां रञ्जकानां कथानां च विषये वदन्त: जना: मया दृष्टा:। जुलैमासस्य चन्दमामाया: मासिकं प्रकाशितम्। मासिकं पठनकक्षे स्थापितम्। किन्तु अन्य कोऽपि तद् पठन्नासीत्। प्रत्येक: वदति स्म, ''बहु सम्यक्! उत्तममेतत्!'' इति। मासिकस्य पठनं प्रतीक्षमाण: श्रान्त: अहं कथञ्चित् षट्आणे मूल्यं संगृह्य मासिकं क्रेतुम् आपणात् आपणम् अटितवान्। किन्तु प्रतय: समाप्ता: सर्वत्र। केभ्यश्चन दिनेभ्य: अनन्तरं यदा मासिकं सुजीर्णं पुरातनं जातं तदा मया प्राप्तम्। मुखपृष्ठस्थेन रजतमयूरेण सम्यगुदाहरणै: बृहदाक्षरै: कथाभि: च अहम् अन्यलोकमेव नीत:। ऑगस्टमासारम्भे एव स्वचन्दमामां क्रेतुम् आपणेषु पृच्छा आरब्धा मया।



Name: Ravi Kondala Rao
Occupation: Actor & Editor, Hyderabad.

एक: आपणिक: अवदत्, 'नूतन: चन्दमामा आगत: अस्ति। किन्तु तस्य प्रतय: प्रतिनिधे: समीपे एव वर्तन्ते'' इति। अहं तम् आपणिकं प्रतिनिधे: गृहसङ्केतं पृष्टवान्। तेनोक्तम्, 'रैलस्थानकस्य अन्यपार्श्वे तस्य गृहमस्ति।'' लोहमार्गम् लङ्घित्वा अन्यपार्श्वं गत्वा बहुपरिश्रमेण प्रतिनिधिगृहम् अन्विष्टं मया। एतावत् परिश्रमानन्तरं तस्य प्रतिनिधे: प्रत्युत्तरम् आसीत्, ''प्रतय: मम समीपे सन्ति। किन्तु पुस्तकापणानि नोद्घाटितानि इतोऽपि। श्व: प्रात: अहं आपणेषु वितरिष्यामि ता:। तत्र गत्वा क्रीणातु।'' उत्साहनष्ट: अहं कथञ्चित् तत: प्रस्थित:। औत्सुक्येन सूर्योदयस्य प्रतीक्षा कृता।

पाठशालागमनात् पूर्वम् अहं मासिकापणं गतवान्। इतोऽपि प्रतिनिधि: नागत: इति उक्तं आपणिकेन। अत्रैव स्थित्वा प्रतीक्षणं साधुतरमिति विचिन्त्य तत्रैव स्थित: अहम्। अन्तत: प्रतिनिधि: आपणिकाय दश प्रतय: दत्तवान्। मया शीघ्रतया मम षट् आणे मूल्यम् आपणिकाय दत्त्वा मासिकं क्रीतं गृहं च प्रत्यागत:। आदिनं पाठशालागमनं विहाय एकस्मिन्नेव स्थाने उपविश्य मया पुस्तकं पठितम्। तदा हर्षोल्लसित: अभवम्। कोऽपि तन्मासिकं न पठतु इति विचारेण तत् मया गोपितम्। तेषु दिनेषु चन्दमामाविषये मम अनुभव: एतादृश: आसीत्। तत:

प्रभृति प्रतिमासे मम समीपे चन्दमामा भवति।

यदा अहं मद्रासनगरम् आयात: तदा जॉर्जमार्गस्थितं चन्दमामा-कार्यालयम् आदौ अन्वव्रजम्। षण्णवैकतमे शतके तस्मिन्नेव कार्यालये साहाय्यक-सम्पादक-रूपेण मया उद्योग: प्राप्त:। 'विजयचित्रस्य' अपि प्रकाशनम् तत: भवति स्म। अधुना चन्दमाम: मम कृते सुगोचर:। चन्दमामा इतोऽपि उपागता। चन्दमामा वितरणाय गमनात्पूर्वं तस्य एका प्रति: प्रथमं ममोत्पीठिकायां स्थाप्यते स्म। चन्दमामा यस्य कृते कदाचित् मया आनगरं धावितं; स: अधुना स्वयमेव माम् अनुव्रजति। एतन्मम सौभाग्यं मया सानन्दमनुभूतम्। अधुनापि यदा चन्दमामां पश्यामि स्पृशामि च तदा तदेव औत्सुक्यमनुभवामि।

## मम स्मृतयः - ओडिया

**च**न्दमामा मनोजदास: अहं च अस्माकं सम्बन्ध: पञ्चचत्वारिंशद्वर्षेभ्य: पुरातन:। तदाहं माध्यमिक-विद्यालये पठन्नासम्। 'समाज' नाम्नि प्रसिद्ध-ओडिया-दैनिके उत्कृष्टलेखक: मनोजदास: 'सम्बन्ध: समीक्षा च' इति लेखं लिखति स्म।



Name: B.K. Satapathy
Occ : Retd. Bank Officer,
Bhubaneswar, Odisha.

एष: लेख: नाम साम्प्रतघटनानां समीक्षणं भवति स्म। एकस्मिन् लेखे तेन तामिळनाडूप्रकाशनस्य एकं पुस्तकं तस्य महत्त्वं च एतयो: विषये लिखितमासीत्। तेन दशशीर्षकाणां एका सूचि: कृता। तानि पुस्तकानि सम्पठ्य जगद्वाङ्मयस्य सम्पूर्णचित्रं प्राप्यते इति मन्ये।

तं लेखं पठित्वा मनोजदासं प्रति तस्य पॉण्डेचेरिसंकेते एकं पत्रं लिखितं मया। केषुचन दिनेषु सा सूचि: मया प्राप्ता। किन्तु तस्मिन् समये तानि दश पुस्तकानि क्रेतुं न शक्तवान्। विंशति: वर्षाणि व्यतीतानि। तानि पुस्तकानि क्रीत्वा पठामि इति मम चिन्तनमासीत्। किन्तु तावत् पर्यन्तं सा सूचि: मया नष्टा।

मया मनोजदास: अपि पृष्ट: किन्तु सोऽपि तां न प्राप्तवान्। मया पुन: पत्रं लिखितम्। तेन प्रत्युतरितम्,'सुमासिकं पठितुमिच्छसि वा? कस्यापि सुमासिकस्य नाम वदतु। आपणे तु क्रीडाचित्रपटादिभि: पूर्णानि न्यूनमूल्यानि मासिकानि प्राप्यन्ते। त्वया तु प्रतिमासं चन्दमामा पठितव्य:।'' तत: प्रभृति अहं चन्दमामां पठामि।

## विक्रमः वेतालश्च

# पुत्रद्वयम्

दृढनिश्चयः राजा विक्रमः यथापूर्वं वृक्षं प्रत्यागच्छत्। सः वृक्षात् प्रेतम् अधः आनीय स्कन्धे च धृत्वा मौनं श्मशानं प्रति गमनमारब्धवान्। ततः प्रेते वसन् पिशाचः एवम् अवदत्।

"हे! राजन्! त्वमतीव शूरः धीरश्चासि। किन्तु त्वं मध्ये रात्रौ कस्मात् हेतोः एतावत् कष्टं सहसे इति तु न ज्ञायते। यदि त्वं धर्मनिर्णयार्थम् एवं प्रयतसे तर्हि आश्चर्यमेव। केचन धर्मनिर्णये समवर्तित्वं प्रदर्शयितुं प्रयतन्ते। किन्तु ते अन्ततो गत्वा ज्ञात्वा वा अज्ञात्वा वा पक्षपाततां दर्शयन्त्येव। यदि त्वं तादृशानां कृते एवं यतसे तर्हि अन्ततो मोहजाले एव पतिष्यसि। स्वर्णधाराराजस्य विक्रमसेनस्य कथां त्वामहं श्रावयामि। सावधानमनसा एतां कथां शृणु। तया त्वं महतः कार्यभारात् उपशमनं यास्यसि।

स्वर्णधारा-राज्यस्य राजा विक्रमसेनः



नितरां दयामयः शूरः चासीत्। तस्य शासने तद्राज्यस्य प्रजाः सुखेन सम्पद्भिः च विलसन्ति स्म। सः सर्वेषु विषयेषु प्रसन्नः वर्तते किन्तु सन्तानाभावः तमनुक्षणं व्यथयति स्म। अपत्यावाप्तये राजदम्पती नैकाः पूजाः समाचरताम्। नैकेभ्यः दानधर्मादिकमकुरुताम्। बहून् यतीश्वरान् योगीश्वरान् चामिलताम्। तथापि प्रयोजनं न प्राप्तम्। अन्ततः एकस्मिन् दिने निराशा निरुपाया राज्ञी महाराजस्य विक्रमसेनस्य समीपं गता।

राज्ञी मुकुन्दमाला राजानं पुनर्विवाहाय असूचयत्। किन्तु राजा विक्रमसेनः बहुकालं यावत् तद् नाङ्गीकृतवान्। अन्ततः सः पुनर्विवाहं कृतवान्। तस्य द्वितीयभार्यायाः नाम वल्लिकादेवी।

कालान्तरे वल्लिकादेवी गर्भिणी जाता। इमां वार्तां श्रुत्वा राज्ञः अपेक्षया राज्ञी मुकुन्दमाला अतीव आनन्दमन्वभवत्। एकस्मिन् शुभदिने राज्ञी वल्लिकादेवी एकं स्वस्थं बालकं प्रसूतवती। राजा विक्रमसेनः तस्मै जयतेजः इति नाम कृतवान्। भगवतः कृपाविशेषेण एकवर्षानन्तरं मुकुन्दमालापि गर्भिणी अभवत्। सापि एकस्मिन् शुभदिने एकं सुन्दरं बालकं प्रसूतवती। राजदम्पती तस्मै मयूरध्वजः इति नाम अकुरुताम्।

द्वावपि राजपुत्रौ बाल्यादारभ्य परस्परं मित्रभावेण वसतः स्म। तौ कदाचिदपि नैव कलहेते। तयोः परस्परानुरागं दृष्ट्वा सर्वेऽपि चकिताः भवन्ति स्म। राजा विक्रमसेनः तस्य पुत्रौ गुरुकुलम् प्रैषयत्। जयतेजः मयूरध्वजः च गुरुकुले उत्तममध्ययनम् अकुरुताम्। महान् कालः व्यतीतः। यूनौ राजपुत्रौ तयोः विद्याभ्यासं समापितवन्तौ। राजा तौ दृष्ट्वा नितरां सन्तुष्टः अभवत्।

वृद्धः विक्रमभूपतिः अधुना स्वपुत्रयोः अन्यतरं स्वसिंहासनस्य उत्तराधिकारिणं कर्तुं वाञ्छति। ज्येष्ठपत्न्याः ज्येष्ठपुत्राय राज्याधिकारः भवेदिति सम्प्रदायः। किन्तु तस्य द्वितीयपत्न्याः पुत्रः प्रथमपत्न्याः पुत्रस्यापेक्षया ज्येष्ठः। तर्हि अधुना राज्याधिकारः ज्येष्ठाय कनिष्ठपत्नीपुत्राय देयः अथवा कनिष्ठाय ज्येष्ठपत्नीपुत्राय? विक्रमसेनः

किमपि निर्णेतुं न शक्तवान्। सः स्वामात्यानामपि अभिप्रायं स्वीकृतवान्। किन्तु न कोऽपि तस्य प्रश्नं निर्दुष्टसमाधानेन तमतोषयत्।

किमपि निश्चेतुमशक्नुवन् सः स्व-पुत्रौ आहूय इत्थमकथयत् ''प्रियपुत्रौ! युवां द्वावपि षण्मासपर्यन्तं राज्यं परितः पर्यटनार्थं प्रेषयितुमिच्छामि। समयेऽस्मिन् अस्माकं प्रतिवेशिराज्यानामपि परिशीलनं भवतु। तदनु मत्सविधे युवयोः अभिप्रायान् प्रकटयताम्'' इति। तौ पितुराज्ञाम् अङ्गीकृत्य पर्यटनाय प्रस्थितवन्तौ। मातरौ च नत्वा युवराजोचितेन परिवारेण ससैन्यं प्रस्थितौ।

षण्मासानन्तरं तौ प्रत्यागतौ। राजा विक्रमसेनः तयोरनुभवान् अपृच्छत्।

ज्येष्ठः जयतेजः इत्थमवदत् ''अहमस्माकं राज्यस्य सर्वेषु कोणेषु पर्यटितवान्। अस्मत्प्रतिवेशि- वैकन्तिकाराज्यमपि मया दृष्टम्। अस्माकं राज्यं सर्वविधैः सम्पद्भिः समृद्धमस्ति। अत्रत्याः प्रजाः भवतः शासनेन सन्तृप्ताः। अस्माकं राज्येन सह वैकन्तिकाराज्यस्य तुलना सर्वथा न भवति। ते अस्माकं पालने गुणदोषान् विवेचयन्तः सन्ति, तथा शासने अस्माननुसर्तुं ते प्रयतन्ते। तेनैव अस्माकं मान्यत्वं प्रकटीभवति'' इति।

राजा विक्रमसेनः कनिष्ठं पुत्रमपश्यत्। तदा मयूरध्वजः वक्तुमारभत ''भ्रात्रा उक्तं यदस्माकं राज्यं सर्वविधसम्पद्भिः समभिवृध्दमिति। किन्तु अहं भावयामि यदेकः राजा स्वस्य सफलताविषये कदापि सन्तृप्तः न भवेदिति।





सम्प्रत्यपि अस्माकं राज्ये दारिद्र्यमस्त्येव। तदस्माभिः निर्मूलनीयम्। अस्मत्प्रतिवेशिराज्यात् निरन्तरं प्रवहन्त्याः गङ्गायाः दर्शनेन मम मनसि एकः विचारः प्रस्फुरितः। अस्माकं राज्ये नद्यः न सन्ति। यदि तस्याः किञ्चित् जलम् अस्माकं राज्यं प्रति सञ्चारयामः, तर्हि राज्यमिदं कदापि दुर्भिक्षं न प्राप्स्यति। तथा सर्वदा कालकृतवृष्ट्याश्रिताः अपि वयं न भवेम।''

''तव चिन्तनं तु युक्तमेव। किन्तु अस्माकं प्रतिवेशि-वैकन्तिकाराज्यस्य राजा रुद्रकेतुः अस्मान् शत्रुं मन्यते। तथा च कथं वा वयं ततः जलं अस्मद्राज्ये प्रवाहयितुं शक्नुमः ?'' इत्यपृच्छत् विक्रमसेनः।

तदा जयतेजः उक्तवान् यत्'' प्रतिवेशिराज्यात् नदीजलस्य आनयनं तु असाध्यमेव'' इति।

तच्छ्रुत्वा मयूरध्वजः ''प्रयत्नेन विनैव तदसाध्यमिति वयं कथं वक्तुं शक्नुमः। सर्वासां समस्यानां परिष्कारः भवत्येव। अस्माभिः तस्यां दिशि प्रयत्नो विधेयः। भ्रातः! सर्वदा अस्माकं सानुकूलचिन्तनमेव भवतु'' इत्यवोचत्।

''अस्तु, यथा मयूरध्वजेनोक्तं तथा अस्माकं यत्नः भवतु'' इति वचनेन राजा विक्रमसेनः सम्भाषणं समापितवान्।

कतिचन मासाः व्यतीताः। वैकन्तिकाराज्यस्य राजा विक्रमसेनं युद्धार्थं आहूतवान्। तदा विक्रमसेनः स्वामात्यैः सह सङ्गोष्ठीम् आयोजितवान्। तत्र तेन स्वपुत्रौ अपि आहूतौ। सः सर्वेभ्यः सूचनाः स्वीकृतवान्। तदा जयतेजः पितरम् इत्थमसूचयत् ''तात! रुद्रकेतोः सैन्यम् अस्माकं सैन्यापेक्षया द्विगुणितं वर्तते। यदि युद्धं भविष्यति तर्हि वयम् अवश्यं पराजयं प्राप्स्यामः। अतः सम्प्रति सन्धये प्रयत्नः एव उचितः'' इति।

तदनु विक्रमभूपतिः तस्य कनिष्ठपुत्रस्य मयूरध्वजस्य अभिप्रायम् अपृच्छत्। ''एषः उत्तमः अवसरः इति वयं चिन्तयामः। यदि वयं अस्माकं सैन्यं सन्नद्धं कृत्वा अग्रे सारयामः, तर्हि वयं गङ्गाप्रवाहम् अत्र आनेतुं शक्नुमः। यतः वैकन्तिकाराज्यस्य राजा

निष्कारणमेवास्मान् आक्रमति। यदि वयम् अस्मत्प्रतिवेशिभ्यः मित्रराज्येभ्यः साहाय्यं प्रार्थयामः, तर्हि ते प्रायः क्वचित् सैन्यं प्रेषयन्ति। तथापि वयं सम्पूर्णविश्वासेन विचिकित्सया विना अग्रेसराः भवेम'' इत्युक्तवान् मयूरध्वजः।

'एष एव उत्तमः मार्गः' इति मतवान् राजा विक्रमसेनः।

मयूरध्वजस्य चिन्तनानुसारं मित्रराज्यानां राजानः युद्धे साहाय्यम् आचरितुं स्वसैन्यं प्रैषयन्। युवा धीरश्च मयूरध्वजः सेनाम् अचालयत्। सः स्ववचोभिः धीरान् योद्धृन् प्रेरितवान्। मयूरध्वजस्य नायकत्वे स्वर्णधाराराज्येन विजयः सम्प्राप्तः।

मयूरध्वजः स्वराज्यं प्राप्य पित्रे विजयवार्तां श्रावितवान्। तदा तेनोक्तं ''तात! युद्धात् पूर्वं भवतः मनसि राज्यस्य उत्तरदायित्वं कस्मै देयम्? मह्यम् उत जयतेजाय इति विकल्पस्थितिः आसीत्। सम्प्रति सा समस्या अपगता। अहं प्रार्थयामि यत् जयतेज एव अस्य राज्यस्य उत्तरदायी भवतु। मया जितं वैकन्तिकाराज्यं मह्यं प्रददातु'' इति।

प्रसन्नः विक्रमभूपतिः सन्तोषेण मयूरध्वजम् आलिङ्गितवान्। एकस्मिन् शुभदिने मयूरध्वजं स्वर्णधारायाः सिंहासने, जयतेजं वैकन्तिकाराज्यसिंहासने च अभिषिक्तवान्। तथैव वैकन्तिकाराज्यं स्वर्णधाराराज्यस्य शासनाधीने भविष्यतीत्यपि उदघोषयत्।



एवं कथां श्रावयित्वा वेतालः ''राजन्! जयतेजस्तु वास्तविकं तथा आर्थिकं च चिन्तनमकरोत्। अत एव सः स्व-पितरं प्रतिवेशिराज्येभ्यः स्वर्णधाराराज्यं श्रेष्ठमित्यकथयत्, तथैव यदा रुद्रकेतुः युद्धं प्राकटयत् तदा प्राणहानिः राज्यहानिः मा भवतु इति धिया तेन सूचितमासीत् यत् वैकन्तिकाराज्यस्य सैन्यं द्विगुणितं वर्तते। वयं तेन सह सन्धिं कुर्मः इत्यपि असूचयत्। किन्तु मयूरध्वजः गङ्गाजलं स्वराज्ये आनीतं चेत् स्वराज्यस्य इतोऽपि विकासः साध्यः इति मत्वा पितरम् अङ्गीकारयितुं, यदि वयं जयं प्राप्स्यामः तर्हि नदीजलानयनं सुकरमित्युक्त्वा पितरम् अङ्गीकारितवान्। भाग्यवाशात् ते जितवन्तः।

अन्यथा तेषां हस्ते अधुना यदस्ति तदपि नष्टम् अभविष्यत्। तथैव मयूरध्वजेन प्रार्थितमासीत् जयतेजः स्वर्णधाराराज्यस्य राजा भवतु, मां वैकन्तिकाराज्यस्य राजानं करोतु इति। किन्तु विक्रमसेनः तद्विपरीतम् आचरितवान्। स्वर्णधाराराज्यं मयूरध्वजाय दत्त्वा वैकन्तिकाराज्यं जयतेजाय प्रादात्। तथैव वैकन्तिकाराज्यं स्वर्णधाराराज्यस्य अधीने भवति इत्यपि आदिष्टवान्। किमिदं विक्रमसेनस्य कनिष्ठपुत्रे प्रीतिं तथा पक्षपातभावनां च न प्रदर्शयति? यदि मम प्रश्नानां समाधानं ज्ञात्वापि न वदिष्यसि तर्हि तव शिरः सहस्रशकलेषु छिन्नं भविष्यति।''

तच्छ्रुत्वा राजा विक्रमः ''यत्किमपि राज्यं तदैव विकसितं भवति यदा तस्य राज्यस्य राजा प्रकृतस्थित्या असन्तृप्तः सन् स्वराज्यस्य विकासाय प्रयतमानः भवति। सः स्वप्रजानामपि विकासाय भावियोजनाः कुर्यात्। तथैव राज्ञः सर्वदा सानुकूलदृक्पथं स्यात्। तदैव राज्यस्य विकासः सम्भवति। यदि राजा एव प्रतिकूलबुद्धिं दर्शयति तर्हि कथं विकासो भवेत्? तस्मादेव जयतेजः सन्तृप्तिभावनां प्रादर्शयत्। मयूरध्वजस्तु भावियोजनां कृतवान्, अग्रे स्थित्वा सैन्यस्य नेतृत्वमूढवान्। चक्रवर्तिनः सर्वविधगुणान् प्राकाशयत्। अत एव राजा विक्रमसेनः मयूरध्वजाय स्वर्णधाराराज्यं प्रायच्छत्। तदैव ज्ञातं यत् जयतेजाय तादृशगुणवर्धनार्थं कश्चन समयः आवश्यकः इति। अत एव सः मयूरध्वजराज्यस्याधीने भवतु इति आदिष्टवान्। न तु कनिष्ठपुत्रे प्रीत्या इदमाचरितं न वा पक्षपातबुद्ध्या'' इति समाधत्तवान्।

विक्रमेण एवं स्वमौनं परित्यज्य यदा समाधत्तं तदा वेतालः शवेन सह अदृश्यतां गतः यथापूर्वं पुनः वृक्षमारूढवान् च।

*- एन्. शिवनागेश्वरराव:*





# अस्ति कः दुरात्मा ?

कस्मिंश्चित् ग्रामे धनगुप्तः नाम धनवान् निवसति स्म। नैकैः पापकर्मभिः तेन प्रभूतं द्रव्यम् अर्जितम् आसीत्। धनगुप्तम् आदर्शवत् अनुसरन्तः अनेके वणिजः धनाढ्याः जाताः।

शनैः शनैः वार्धक्यस्य छायां पश्यन् तथा मृत्योः ईषद्बोधम् अनुभवन् धनगुप्तः कृतकर्मभ्यः अबिभेत्। सम्पूर्णम् जीवनं कुकर्मसु एव व्यतीतम्, इदानीं यदि ईषदपि पुण्यं न सञ्चितं तर्हि नरके कीदृशः यातनाभारः सक्ष्यते न जाने''। एवं भयेन विचिन्तयन् धनगुप्तः पुण्यसञ्चयार्थं तीर्थाटनं कर्तुं निश्चितवान्।

तीर्थयात्रार्थं कृतनिश्चयं धनगुप्तं दृष्ट्वा अन्ये त्रयः धनिनः अपि सहगन्तुं सिद्धाः जाताः। तैः अपि जीवनावधौ पुण्यसञ्चयं कर्तुं नैव चिन्तितम्।

धनगुप्तः विना हेतुं किमपि कार्यं न करोति। अतः सः चिन्तितवान् यत्, 'पुण्यं विना अस्याः यात्रायाः अन्यः कः लाभः शक्यः स्यात्। यदि स्यात् तर्हि अस्माभिः अयं लाभः कस्मात् न प्राप्तव्यः ? यदि वयं चत्वारः मिलित्वा यात्रार्थं गच्छामः तर्हि व्यक्तिगतः व्ययः अपि न्यूनः भवेत्। यात्रायां यदि कोऽपि व्याधिग्रस्तः भवेत् तर्हि अन्ये तस्य साहाय्यं करिष्यन्ति' एवं विस्तरेण विचिन्त्य धनगुप्तः अन्यैः त्रीभिः धनिभिः सह यात्रार्थं प्रस्थितः।

ते सर्वे व्यमृशन् यत् ''काशीं गन्तव्यम् वा रामेश्वरम् ? एवं तु लोकोक्तिः-

सिंगमपल्ली आप्पारावः

''काशीप्रस्थानम् श्मशान-गमनं इव'' इति। रामेश्वरं समीपम् आसीत्, मार्गोऽपि प्रवाससुलभः आसीत्। तस्मिन् ग्रामे रामलालः नाम शूद्रः निवसति स्म। सः स्वकुटुम्बीयैः सह कलहं कृत्वा त्रिवारं रामेश्वरयात्रां कृतवान्। तत्कृते रामेश्वरयात्रा अतीव सुकरा आसीत्। अतः रामलालेन सह रामेश्वरयात्रां कर्तुं तैः निश्चितम्।

कस्मिंश्चित् सुदिने ते चत्वारः रामलालेन सह 'रामनाम' जपन्तः रामेश्वरं प्रति प्रस्थिताः। यात्रा तु निर्विघ्ना आसीत्। ईप्सितं स्थानं प्राप्तुं द्वि-त्रिदिनात्मकः अवधिः अवशिष्टः। तावता एव गर्जद्भिः कृष्णवर्णैः पयोदैः आकाशं व्याप्तम्। कस्मिंश्चित् वनान्तरे प्रविशत्सु तेषु सहसा वर्षा प्रारभत, वातचक्रं सवेगम् अभ्रमत्। वातचक्र-प्रभावेण अनेके वृक्षाः उन्मूलिताः, कृष्ण-मेघास्तु भयकारिणा ध्वनिना गर्जनामेव आरब्धवन्तः। उच्चैः स्वनन्ती तथा द्योतमाना विद्युल्लता तेषां नयनानि अन्धीकृतवती।

आत्मरक्षणाय ते सर्वे किञ्चन मन्दिरं प्राविशन्। प्रतिक्षणं वर्धिष्णु-द्युतिः चपला वर्धमानेन पर्जन्येन सह अस्पर्धत। मन्दिरस्य पुरः घोरे विद्युत्पाते वहति सति समीपस्थः एकः वृक्षः तडिताघातेन दग्धः जातः, तस्याऽर्धभागः च निपतितः। कतिपयसमयानन्तरं मन्दिरस्य निकटे एव तडित्पातः जातः।



एतेन ते पञ्च यात्रिणः अतीव भयाकुलाः जाताः।

'रे! किदृशी इयं विद्युत्प्रभाविता महती कराला वर्षा! मया अद्यपर्यन्तं नाऽनुभूता। अस्मासु कश्चन दुरात्मा वर्तते, सः एव महत्याः वर्षायाः कारणम्।'' धनगुप्तः न्यगदत्।

''अयं रामलालः एव पापात्मा अस्ति। एनम् अत्र आनाय्य अस्माभिः प्रमादः कृतः। आनीतोऽस्ति खलु, परन्तु अयम् अत्र अवाञ्छितः इव तस्थौ। अपि ईश्वरः न पश्यति? असन्तुष्टः न भवति?'' एकः वणिक् अभणत्।

अन्यैः चतुर्भिः रामलालः बलेन मन्दिरात् बहिः निष्कासितः।

'हे बान्धवाः। आत्यन्तिकी वर्षा प्रपतति, नितरां क्लिद्यामि! अनुकम्प्यताम्। पुण्यं प्राप्यताम्। मन्ये, अहं तु पापी, परन्तु युष्मत्सदृशैः पुण्यात्मभिः सह निवसन्तं मां ईश्वरः नैव अपकुर्यात्। मत्कारणेन युष्मान् कथं दण्डयेत्? ईश्वरः एवम् अन्यायं न करिष्यति'' इति दीनः हतबलश्च रामलालः अयाचत।

यथा रामलालः हस्तौ बद्ध्वा व्यज्ञापयत् तथा ते रामलालम् अधिकमेव विरोद्धुं प्रावर्तन्त। अन्ततः ते रामलालं घोरे पर्जन्ये प्रतुदितवन्तः। रामलालः आत्मानं रक्षितुं प्रधावत् कस्यचित् वृक्षस्य अधः च अतिष्ठत्। अनुक्षणमेव गगन-भेदी भीषणः स्वनः अश्रूयत, तडितत्पातः जातः, विद्युत्तेजसा वातावरणं व्याप्तम्। यदा रामलालः भयात् निमीलिते नेत्रे उन्मीलितवान्, तदा तेन मन्दिरं न दृष्टं, केवलं अश्मराशिः दृग्गोचरः जातः। चत्वारः यात्रिणः अपि तत्स्थानं परितः न दृष्टाः। ते तडित्पातेन मृताः जाताः।





# शुनकेन आनीतं परिवर्तनम्

**क**स्मिश्चित् वने मनोहर: नाम कोऽपि चोर: लघुगृहे वसति स्म। रात्रौ स: 'सिङ्गंवरम्' आगच्छति स्म यथावसरं च किमपि गृहम् अतिक्रम्य धनं चोरयति स्म। एकस्मिन् दिने चौर्यकर्म कृत्वा यदा मनोहर: प्रत्यागच्छन् आसीत् तदा कोऽपि कुक्कुरशाव: तम् अनुधावन् तस्य गृहपर्यन्तम् आगत:। मनोहर: तम् अभोजयत् तदनन्तरं च स: कुक्कुरशाव: तेन सह एव अतिष्ठत्। स: अचिन्तयत् यद् स: कुक्कुरशाव: नाम स्वस्य एकाकितां विस्मर्तुम् ईश्वेरण प्रेषित: उपहार: एव अस्ति। यथाकालं कुक्कुरशाव: पुष्ट: जात:, सिंह: एव साहसिक: अपि जात:।

एकस्मिन् दिने धनं चोरयन् मनोहर: रक्षकै: गृहीत: वर्षद्वयपर्यन्तं कारावासार्थं प्रेषित: च।

यदा मनोहर: न प्रत्यागच्छत् तदा कुक्कुर: मनोहरम् अन्विष्यन् बुभुक्षित: कस्यचित् गृहस्य पुरत: आगत:। तस्य गृहस्य स्वामी निर्मल: नाम कृषक: आसीत्। स: कृषक: तस्मै शावाय करुणया किमपि खादितुम् अयच्छत। अचिरादेव निर्मलशावयो: मध्ये अपि दृढबन्ध: निमित:। शाव: निर्मलेन सह क्षेत्रं गच्छति स्म, तेन सह एव गृहं प्रत्यागच्छति स्म। रात्रौ स: तस्य गृहस्य रक्षणं करोति स्म।

वर्षद्वयं यापितम्। मनोहर: कारागृहात् बन्धमुक्त: भूत्वा गृहं प्रत्यागच्छत्। स: कुक्कुरस्य कृते निखिलं वनं अन्विष्यत्। यदा कुक्कुर: न लब्ध: तदा स: अतीव दु:खित: अभवत् तथा च शाव: कुत्र गत: स्यात् इति चिन्तया चकित: अभवत्।

डी. पौणिमा

स्वस्य स्थायीभावम् अत्यक्त्वा एकस्मिन् दिने मनोहरः किमपि गृहम् अतिक्रान्तुम् सिङ्घवरम् अगच्छत्। तद् गृहं निर्मलस्यासीत्। मनोहरः गृहभङ्गं कर्तुम् आरम्भं कृतवान्।

पदरवेण जागृतः कुक्कुरःचोरं दृष्टवान्। किन्तु सः मनोहरः इति ज्ञातवान् तत्रैव च तूष्णीं स्थितवान्। किन्तु मनोहरेण सः कुक्कुरः न अभिज्ञातः।

अधुना कुक्कुरः उभयसम्भ्रमे पतितः । पालनकर्तारं मनोहरं प्रति निष्ठावान् भवेयम्? अथवा आश्रयदातारं निर्मलं प्रति निष्ठां प्रदर्शयियम्? तदा निर्मलः अपि ध्वनिना जागरितः अभवत्। सः ज्ञातवान् यद् कोऽपि चोरः गृहम् अतिक्राम्यन् अस्ति। सः अनुक्षणं गृहात् दण्डं गृहीतवान्। दण्डं हस्ते स्थापयित्वा प्रविशन्तं चौरं मारयितुं सः मारयितुं सिद्धः अभवत्।

कुक्कुरः द्वारविच्छेदात् निर्मलं तथा च तस्य हस्तस्थं दण्डं दृष्टवान्। सः ज्ञातवान् यद् प्रविष्टे एव मनोहरे सः तं प्रहर्तुं सिद्धः आसीत्। कुक्कुरः "किं कर्तव्यम् " इति सम्भ्रमे आसीत्।

मनोहरः गृहं प्रवेष्टुं सिद्धः अभवत्। तत्क्षणमेव कुक्कुरः स्वयमेव द्वारविच्छेदात् गृहं प्रविष्टवान्। गृहाभ्यन्तरं आगतं तं चोरम् एव मत्वा निर्मलः तं दण्डेन प्रहृतवान्। तत्क्षणमेव कुक्कुरः आक्रोशं कृत्वा मृतः जातः। तेन ध्वनिना जागृतः मनोहरः ततः पलायनं कृतवान्। निर्मलः न ज्ञातवान् यद् किमर्थं श्वानेन प्राणत्यागः कृतः। सः स्वयमेव स्वस्य कुक्कुरं हतवान् इत्यर्थम् अतीव दुःखितः अभवत्।

अन्येद्युः मनोहरः ग्रामम् आगतवान् सर्वां वार्तां ज्ञातवान् च। सः मृतं कुक्कुरं दृष्टवान् स्वस्य कुक्कुरं ज्ञात्वा रोदितवान् च। श्ववत् मत्सकाशे बुद्धिचातुर्यं तथा च प्रामाणिकता नास्ति एवं विचिन्तयन् सः खिन्नः अभवत्। तदारभ्य मनोहरः चौर्यकर्म त्यक्त्वा कष्टजीवी मनुष्यः अभवत्।



# कः योग्यः मन्त्री?

**क**स्यचित् राज्ञः प्रधानमन्त्री अकस्मात् मृतः। तस्य अधीने त्रयः उपमन्त्रिणः आसन्। राजा अचिन्तयत् यत् 'एतेषु त्रिषु उपमन्त्रिषु प्रधानमन्त्रिरुपेण कः अर्हः?' इति। तेषु त्रिषु एकस्मै मन्त्रिपदं ददामि चेत् अन्ययोः अन्यायः भविष्यति। राजा स्वयं निर्णयं कर्तुम् असमर्थः अभवत्।

कानिचन दिनानि अतीतानि। अथैकदा राजा सदलबला इति नद्याः तीरं प्राप्तवान्। तेन सह त्रयः उपमन्त्रिणः अपि आसन्। सर्वे नद्याः तीरे उपविश्य विश्वसम्बन्धविषयाणां चर्चां कुर्वन्तः आसन्। तदा राजा नदीं पश्यन् उपमन्त्रिणः अपृच्छत् "जले प्लवमानं किमपि वस्तु अत्रागच्छति। किं स्यात् तत्?"

त्रिषु एकः उपमन्त्री उक्तवान् "तत् एकं फलं स्यात्" इति।

द्वितीयः स्थित्वा नदीं पश्यन् उक्तवान् "आम्, आम्! महाराज! तत् आम्रफलम् अस्ति।"

तदा तृतीयः उपमन्त्री उत्थाय स्ववस्त्र-उष्णीषादीकं नद्याः तीरे स्थापयित्वा नद्यां तरणं कर्तुं कूर्दितवान्। तस्मिन् समये तत् फलमपि समीपम् आगतमासीत्। सः तत् फलं स्वीकृत्य तीरं प्राप्तवान् तथा च राज्ञः हस्ते दत्तवान् अपि।

एतद् सर्वं दृष्ट्वा तस्मै कार्यकुशलाय उपमन्त्रिणे राजा प्रधानमन्त्रिपदं दत्त्वा तम् अलङ्कृतवान्।



# विभाजनं सम्पत्तेः

**पु**रा 'ओटिमित्त' नामके ग्रामे रामः नाम एकः कृषीवलः आसीत्। स्वीकृते प्रत्येकस्मिन् कार्ये सः समृद्धिमलभत उत्तमतया अजीवत् च। गच्छता कालेन सः निश्चितवान् यत् 'अहं मम सम्पत्तिं मम चतुर्षु पुत्रेषु विभाजयामि' इति।

वृद्धरामेण स्वपुत्राः आहूताः। सम्पत्तेः निर्वाहविषये ते किं चिन्तयन्ति इति सः ज्ञातुम् ऐच्छत्। "पुत्राः! नाहं जानामि कियत् कालं जीवेयम्। यावत् अहं जीवामि तावदेव मम सम्पत्तेः व्यवस्थां युष्मासु चतुर्षु कल्पयितुमिच्छामि। भविष्ये स्वस्य दायित्वविषये यूयं किं चिन्तयथ इति अहं ज्ञातुं शक्नोमि चेत् युष्मदिच्छया अहं सम्पत्तेः विभाजनं कर्तुं पारयामि। मम निधनानन्तरं तद्विषये भवत्सु विवादः न भवेत्" इति। "तात, अहं कृषिविषयकं दयित्वं स्वीकरोमि।" सत्वरमुक्तवान् ज्येष्ठः पुत्रः। किञ्चित् कालं चिन्तयित्वा द्वितीयपुत्रः उक्तवान्, "तात, स्वग्रामे विद्यमानस्य सम्पत्तेः दायित्वम् अहं निर्वहामि। तेषु तृतीयः पुत्रः अगदत्, "तात, ग्रामान्तरे विद्यमानस्य सम्पत्तेः दायित्वं मम भवतु" इति। अधुना केवलं राष्ट्रान्तरे विद्यमानस्य व्यापारस्य दायित्वमवशिष्टम्। रामः तद्विषये स्वस्य चतुर्थं पुत्रं पृष्टवान्। तस्य अपेक्षा आसीत् यत् कनिष्ठः पुत्रः तद् दायित्वं स्वीकुर्यात्। उत्तरम् अदत्त्वा सः सावकाशम् उक्तवान्, "प्रिय तात, भवता मह्यं किमपि न दातव्यम्। भवता इदम् जीवनं मह्यं दत्तम्। अहं समर्थः स्वतन्त्रः च कृतः। एतद् मदर्थं पर्याप्तमस्ति। अहं भवतः शुश्रुषां करोमि।"

आनन्दितः रामः स्वपुत्रं गाढम् आलिङ्गितवान्। तेनं स्वार्जितं सर्वं चतुर्षु पुत्रेषु समानतया वितीर्णम्। अग्रिमकालार्थं कनिष्ठपुत्रेण सह जीवितव्यम् इति च निश्चितम्। ***- पी. व्यङ्कटेशः***





# पञ्चतन्त्रकथा

राजप्रासादे महाराजेन कश्चन मर्कटः पालितः आसीत्। तस्य अङ्गविक्षेपेण नानाविधाभिः चेष्टाभिः च प्रमुदितमनाः राजा मर्कटं स्व-अङ्गरक्षकरूपेण नियुक्तवान्। खड्गं गृहीत्वा मर्कटः गर्वेण राजानमनुसरति स्म। तं तथाविधं दृष्ट्वा जनाः कुप्यन्ति स्म।

राजप्रासादस्य उचितषड् रसपरिपूर्णं भोजनमास्वाद्य मर्कटः तु न केवलं पुष्टः अपि तु नयन-मनोहरः सञ्जातः। तस्य कृते राजा नूतनमेकं खड्गं निर्मापितवान्। अधुना नूतनखड्गहस्तः सः सर्वदा इतस्ततः भ्रमति स्म।

राजप्रासादस्य निकटे एव विचित्रपुष्पैः फलैः च विभूषितम् एकं रमणीयम् उद्यानम् अवर्तत। शैत्यकाले कदाचित् तत्र अटितुं महाराजः तथा राज्ञी सम्प्राप्तौ। राजानम् अनुसरन्तः सेवकाः उद्यानस्य द्वारि एव अतिष्ठन्। किन्तु मर्कटः तु ताभ्यां सह उद्यानस्य अन्तं प्रविष्टः। बहुकालं यावत् चन्द्रस्य कौमुद्यां पुष्पाणां शोभाम् अवलोक्य दम्पती आनन्दितौ। अन्ततो ताभ्याम् एकस्यां वाटिकायां प्रवेशः कृतः।

राजा तं मर्कटम् उवाच, "श्रुणु तावत्, अधुना वर्तते मे विश्रान्तिकालः। मयि सुप्ते मम निद्राभङ्गः न भवेत् इति द्रष्टव्यं त्वया" इत्युक्त्वा राजा निद्रावशं गतः। ततः केनचित् कालेन राज्ञी अपि सुप्ता। मर्कटः राजदत्तं खड्गं स्वस्कन्धे निधाय तत्रैव स्थितः आसीत्।

अथ कालान्तरेण पुष्पगुल्मेषु गुञ्जन् कश्चन भ्रमरः महाराजस्य शरीरगन्धं प्रति आकृष्टः सन् तस्य शिरसि उपविष्टः।

तत् दृष्ट्वा क्रोधाविष्टः मर्कटः चिन्तितवान्, "मादृशे अङ्गरक्षके अत्र स्थितेऽपि अयं शूद्रः कीटः राज्ञः शिरसि उपविष्टः। कथं वा तस्य

मित्रभेदः - ३२

एतावत् धाष्टर्यम्?'' इत्थं विचिन्तयता तेन वामहस्तेन सः भ्रमरः निवारितः। किन्तु पुनः केनचित् कालेन सः भ्रमरः उड्डीय तत्र सम्प्राप्तः महाराजस्य शिरसि उपविष्टः च। वानरेण बहुधा तं ततः निवारयितुं प्रयत्नः कृतः किन्तु भ्रमरः पौनः पुन्येन आगत्य तत्रोपविशति स्म।

अधुना क्रोधनिमग्नः वानरः उवाच, ''तिष्ठ तिष्ठ रे शूद्र कीट! त्वां सम्यक् पाठं पाठयाम्यधुना'' इत्युक्त्वा स्वहस्तगतं खड्गम् उथाप्य तस्मिन् भ्रमरे प्रहृतवान्। खड्गस्य तीक्ष्णप्रहारेण भूपस्य शिरः शरीरात् विभक्तं जातम्। सः तु उच्चैः आक्रोशन् तत्क्षणे एव मृत्युमुखं गतः।



तं महाक्रोशम् आकर्ण्य राज्ञी जागरिता। सा मर्कटं पृष्टवती, ''हे पापिन्, राजा त्वयि नितरां विश्वसिति स्म। त्वया तु राज्ञः विश्वासघातः कृतः। एवं कस्मात् आचरितं त्वया?'' इति। तया इत्थं पृष्टे सति कपिः सर्वं वृत्तान्तं यथावत् श्रावितवान्। राजसैवकैः आगत्य सः मूर्खः कपिः पलायितः। सर्वे प्रजाजनाः च दुःखसागरे निमग्नाः।

ततः कस्यचित् मन्त्रिणः पुत्रः तत्रागतः। सर्वं वृत्तान्तं ज्ञात्वा सोऽवदत्, ''मूर्खमित्रस्य अपेक्षया विवेकशीलः शत्रुः सर्वथा श्रेयान्। राज्ञः मृत्युम् इच्छन् तस्यारिः ननु विवेकशीलः आसीत्। अत एव तेन भूपस्य प्राणाः रक्षिताः। किन्तु अयं भूपः तु मूर्खमित्रेण वानरेण हतः'' इति।

दमनकाय कथामेनां कथयित्वा अवोचत्, ''अस्माकं सिंहराजस्य समीपे अपि त्वादृशस्य मूर्खस्य प्रियमित्रस्य अपेक्षया विवेकशीलः शत्रुः अभविष्यत् तर्हि तत् वरं स्यात्। त्वं विचारमेनं स्वमनसि दृढं निधेहि? यत् अपराधः तु नूनम् अपराधः एव। तृषार्तः सन् अपि मानवः पङ्कयुक्तस्य गर्तस्य जलं न सेवते। किन्तु त्वादृशस्य राजनीतितज्ज्ञस्य विचाराः तु पृथगेव भवन्ति। खद्योतः अपि अग्निसमः भाति। आकाशः समतलः भासते। असत्यं सत्यायते सत्यं च असत्यायते। किमर्थम् एतानि असत्कर्माणि कर्तुं प्रभवसि त्वम्? स्वार्थं त्यज। तव शुद्धाचरणं नष्टम्।

तव एतदेव आचरणं विलोक्य अस्माकं शासकैः अयं पाठः पठितव्यः यत् त्वादृशस्य स्वार्थमतेः वचनानुसरणस्यापेक्षया अनुभविनां

हितैषिणाम् उपदेश: अनुसर्तव्य:।

दमनक: एतद सर्वं यथावद् अवगन्तुं न शक्तवान्। कपटभावनया किञ्चित् विहस्य स्वभ्रातरं तत्रैव परित्यज्य स: तत: निर्गत:। तावति काले पिंगलक: तथा संजीवक: पुनरेकवारं स्वयुद्धम् आरब्धवन्तौ। पिंगलक: क्षतग्रस्त: जात: किन्तु अन्ततो गत्वा स: संजीवकं हतवान्।

स्वस्य पुरातनस्य मित्रस्य रक्तरंजितं शवं विलोक्य पिंगलकस्य मन: करुणया अद्रवत्। स: मनसि अचिन्तयत्,हा हन्त! कीदृश: अन्याय: मया आचरित:? एतावत् पर्यन्तम् आवाम् अभिन्नौ आस्व। अधुना एनं हत्वा अहम् अपि मृत: इव।

तदा दमनक: पिङ्गलकस्य समीपं गत्वा अपृच्छत्,भो: महाराज, किमर्थं भवान् चिन्ताक्रान्त: दृश्यते? शत्रुपक्षे अस्माकं पिता भवतु पुत्र: वा भवतु, बन्धु: वा भवतु स: अवश्यं हन्तव्य:। अनेनैव प्रकारेण दुर्बल: राजा अनियन्त्रित: न्यायाधिपति:, दुश्शीला पत्नी कपटि मित्रं तथा गर्विष्ठ:

किङ्कर: दूरीकर्तव्यं:। कश्चन सामान्य: मनुष्य: यान् नीतिनियमान् पालयति ते नियमा: भूपस्य कृते न भवन्ति। अन्यै: कृतं दोषाचरणं राजनि गुण: इव मन्यते। समयानुगुणं सन्दर्भानुगुणं च भूपतिना विश्वसनीय: अविश्वसनीय: च भवितव्यम्। स: क्रूर: तथा दयावान् अपि भविता। स: वज्रकठोर: अपि भवेत् तथा कुसुमकोमल: अपि स्यात्। स: दानशूर: अपि भवेत् किञ्चित् लोभाविष्ट: अपि स्यात्। धनस्य जलवत् अत्युपयोग: अपि तेन कर्तव्य: तथा भेषजमिव उपयुञ्जात्। भवत: सिंहासनाभिलाषिणं सञ्जीवकं हत्वा भवता योग्यमेव आचरितम्।

दमनकस्य मुखात् इत्थं सर्वं श्रुत्वा पिङ्गलकस्य मनोव्यथा किञ्चित् उपशान्ता। दमनकं स्वमन्त्रिपदे नियोज्य पिङ्गलक: यथापूर्वं वने शासनम् आरब्धवान्।

*(इति मित्रभेदसमाप्ति:)*






# पात्रता

'**म**हती' नाम्नि राज्ये आसीत् एकं गुरुकुलं यस्य प्रमुखः आसीत् गुरुः श्रीनन्दः। अल्पेनैव कालेन 'श्रेष्ठः' गुरुः इति ख्यातिं लब्धवान् श्रीनन्दः। गुरुकुलस्य निकषा एव आसीत् एकम् उद्यानम्। नन्दः गुरुकुलस्य उद्यानपालकस्य पुत्रः। अशिक्षिते पितरि अपि नितरां जिज्ञासुः अमं नन्दकुमारः। शिक्षणे तस्य रुचिं ज्ञात्वा गुरुः श्रीनन्दः तं शिष्यत्वेन स्वीकृतवान्। तीक्ष्णबुद्धिः मेधावी च नन्दः अभ्यासे अत्युत्साहं निष्ठां च दर्शितवान्।

समीपवर्तिनः राज्यस्य राजपुत्रः विठ्ठलः गुरुश्रीनन्दस्य समीपं पठितुम् आगतः। गुरुः श्रीनन्दः आशिषं दत्त्वा तमवदत् वत्स! स्वागतं तेअस्मिन् गुरुकुले।सर्वैः सहपाठिभिः सह सुखेन अत्र पठतु भवान्।परन्तु - वत्स, गुरुकुलस्य नियमाः त्वया ज्ञातव्याः। तत्र उपवने पिप्पलवृक्षस्य पार्श्वे उद्यानकर्म कुर्वन्तं तं युवकं पश्य। सः नन्दः। तस्य समीपं गच्छ। यत् त्वया ज्ञातव्यं तत् सर्वं सः कथयिष्यति'' इति।

तत्क्षणं विठ्ठलः पिप्पलवृक्षं प्रति गतवान्। तत्र स्ववयस्कं कंचन युवकं दृष्टवान्। तं पृष्टवान्- ''गुरुवर्यः माम् अवदत् यत् नन्दः नाम कश्चन युवकः अत्र अस्ति। कुत्र अस्ति सः इति निर्दिशतु कृपया।''

''अहम् एव नन्दः। कृपया वदतु किं साहाय्यं करवाणि'' इति नन्दः अपृच्छत्। कृष्णं क्षुद्रं कुरूपं च नन्दं विलोक्य विठ्ठलः चकितः जातः। तेन सह पठितुं सः न ऐच्छत्। सः नन्दं पृष्टवान् ''त्वं कस्य राज्यस्य राजपुत्रः ?'' इति।

''अहं न राजपुत्रः। मम जनकः अस्य

डॉ.सिरि



गुरुकुलस्य उद्यानपालक:'' इति नन्द: निर्व्याजम् उक्तवान्। विठ्ठलः विहस्यावदत् - ''एवम्। तदा त्वं गुरो: कृपापात्र: सन् एव अत्र पठसि। तव स्थानमत्र नास्ति इति न जानासि किम्? कीदृशं रूपं तव, का तव पदवी इति न ज्ञायते त्वया इति मन्ये। मादृशै: राजपुत्रैः सह व्यवहर्तुं योग्यता नास्ति तव। नावगच्छसि वा एतत्? कीदृशं साहसं ते अत्र अस्माभि: उच्चकुलीनै: सह उषितुम्।'' इति उक्त्वा स: सत्वरं तत: निर्गतवान्।

विठ्ठलस्य एतादृशेन धृष्टाचरणेन नन्द: अत्यन्तं दु:खित: जात:। सर्वदा दक्ष: प्रसन्न: च दृश्यमान: नन्द: तत: प्रभृति विषण्ण: अवर्तत। एकाकी एव उपवने अतिष्ठत्।

तस्मिन् एतत् परिवर्तनं गुरु: श्रीनन्द: लक्षितवान्। नन्दस्य मनसि कापि चिन्ता वर्तते इति अवगम्य स: सस्नेहं तं पृष्टवान्। नन्द: दु:खेन सर्वं वृत्तान्तं तं प्रावदत्। तत: गुरुकुले पठनस्य आनिच्छां स: प्रकटितवान्। स: केवलम् उद्यानकर्मणि स्वजनकस्य साहाय्यं करिष्यति इति निवेदितवान्।

गुरुणा ज्ञातं यत् विठ्ठलस्य मूर्खवत् गर्वयुतम् आचरणमेव अत्र कारणमिति। स: प्रीत्या नन्दमवदत् - ''प्रिय वत्स, तव रूपं वर्णं स्थानं च शिक्षणे बाधका: भवन्ति इति त्वं मन्यसे। यथा तव इच्छा तथा करवाव। अहं किञ्चित् कार्यार्थं समीपस्थं ग्रामं गच्छामि। त्वमपि मया सह आगच्छ'' इति।

उभौ यात्रार्थं प्रस्थितवन्तौ। मध्ये मार्गे वनमासीत्। तत्र गुरु: नन्दं ''वत्स , क: तव प्रिय: वृक्ष:?'' इति पृष्टवान्। ''मम प्रिय: वृक्ष: तु बिल्ववृक्ष:'' इति नन्देन उक्तम्। गुरु: श्रीनन्द: कमपि वृक्षं निर्दिश्यावदत् - ''स: वृक्ष: दृश्यते ननु , स: एव तव प्रिय: बिल्ववृक्ष:'' इति। नन्द: स्नेहेन तं वृक्षं स्पृष्टवान्।

किञ्चित् अग्रे निर्झरस्य लघु प्रवाह: आसीत्। वहत: जलस्य गद्गदनाद: सुस्वरम् अभासत। नन्द: सोत्साहं जले क्रीडितवान्। नन्द: कुतूहलेन सर्वत्र दृष्टवान्। परिसरे येन केन अपि वस्तुना स: आकृष्ट: जात: तस्य विषये गुरो: सकाशात् नूतनानि तत्त्वानि ज्ञातवान्।

सायंकाले तौ ग्रामं प्राप्तवन्तौ। तत्र तौ शिवमन्दिरं गतवन्तौ। गुरोः आज्ञया नन्देन दीपं प्रज्वाल्य स्तोत्राणि पठितानि। ईश्वरप्रार्थनायां विलीन: नन्द: भजनानि गीतवान्। तस्य सुमधुराणि गीतानि श्रुत्वा मन्दिरं देवदर्शनार्थम् आगता: जना: समाकृष्टा: अभवन् तस्य प्रशंसां च अकुर्वन्।

अन्येद्युः गुरु: शिष्य: च स्वग्रामं प्रस्थितौ। मार्गे गुरुः श्रीनन्द: नन्दं पृष्टवान् "प्रिय नन्द, त्वया चिन्तितं यत् तव रूपं स्थिति: च तव दोषा:। तस्मात् शिक्षणं प्राप्तुं तव योग्यता नास्ति, एवं ननु?"

प्रवासे अस्मिन् त्वया भूमौ चलितं, जले क्रीडितं, वायुः श्वसितः, वृक्षः स्पृष्टः, दीपा: ज्वालिता:, आकाशस्य अध: सुप्तं च। एतेषु पंचमहाभूतेषु केनापि कदापि त्वं न्यक्कृत: किम्?

एतेषां पंचमहाभूतानां विश्वे परमं स्थानम्। तैः निश्चितं यत् त्वयि दोषा: न सन्ति। विना विरोधं तैः सह त्वं जीवितुम् अर्हसि। तव मनोहरेण गीतेन अस्माभि: सरस्वत्याः उपस्थिति: अनुभूता। तव हृदये अन्येषां कृते दया प्रेमभाव: च वर्तते। एतादृश: जन: कथं वा शिक्षणाय अपात्र: भवेत्? कदाचित् कृष्णवर्णेषु जनेषु गौरवर्णीय: जन: कश्चन अन्यान् जनान् आकर्षयति। परं वस्तुत: त्वग्वर्ण: तेजस: कारणं भवितुं नार्हति। ज्ञानेन विद्यया तथा प्राणिनां कृते हृदयस्थेन प्रेम्णा एव तेज: विलसति। अपि ज्ञातं त्वया यत् किं कथयितुम् इच्छामि?" इति गुरुणा पृष्टम्।

गुरो: वचनैः नन्दस्य मनसि स्थितं भयं विनष्टम्। स: जगत: महिमानं दृष्टवान्। हस्तं धृत्वा प्रोत्साहनं ददत: गुरो: औदार्यं ज्ञातवान्। मनस: क्षुद्रभावं स: नाशितवान्। सोत्साहं स: गुरुकुलं प्रति चलितवान्। नन्दस्य नयनयोः द्योतमानं प्रकाशम् अवलोक्य गुरुः श्रीनन्द: प्रमुदितः जातः।





# कृपणः भिक्षुकः

पुरा किल कश्चन राजा राज्यमेकं प्रशास्ति स्म। सः अतीव दयालुः। कस्यापि कष्टं दुःखं श्रुत्वा सः दयार्द्रो भवति स्म। तत्कालं यत्किमपि हस्तगतं भवेत् तस्यैव दयार्द्रतया दानं करोति स्म सः। तत् स्वर्णं भवतु, रत्नानि भवन्तु अथवा धनम्। राज्ञः औदार्येण परमसन्तुष्टाः आसन् तस्य प्रजाः।

एकदा सः रथेन अटन्नासीत्। तस्यामेव वीथ्यां कश्चन भिक्षुकः सकुटुम्बं जीवति स्म। राज्ञः रथं गच्छन्तं दृष्ट्वा तस्य कुटुम्बजनाः अतीव प्रमुदिताः। तदानीं कश्चन गृहस्थः भिक्षुकस्य पात्रे किञ्चित् ओदनं परिवेषयन्नासीत्। राज्ञि दृष्टे सति भिक्षुकः गृहस्थम् अपसार्य धावन् राज्ञः समीपम् अगच्छत् तस्मै सादरम् अभिवादयत् च।

"हे राजन्! जनाः भवतः दानशीलतां सहृदयतां च नितरां प्रशंसन्ति। भवान् कदापि दानविमुखो न भवतीति भवतः कीर्तिः। अहं बहुभ्यः दिनेभ्यः भवता सह मेलितुम् इच्छामि। इदानीं प्रत्यक्षोऽस्ति इति सत्यमुत स्वप्नम् इति मे विवश्चना। यदहं प्रलपन्नस्मि तदपि योग्यम् उत अयोग्यं न जाने। किमपि अनुचितं यदि उक्तं तर्हि कृपया क्षम्यताम्" इत्यवदत् भिक्षुकः।

राजा सारथिं रथं वीथिपारे स्थगयितुम् आदिशत् भिक्षुकं चापृच्छत्, "कोऽसि त्वम्? कुतः आगतोऽसि? का तव समस्मा? किमहं कर्तुं शक्नुमां भवतः कृते।"

"हे राजन्! भवतः प्रजासु परमदौर्भाग्यशाली जनोऽस्मि। दारिद्र्यं तु मम आतिथ्यमेव भजति।

एम्. मदनमोहनरावः

यत्रकुत्रापि गच्छामि तत्र श्रद्धालुः शुनकः इव मम पृष्ठतः आयाति। गतमध्याह्नतः मया किमपि न खादितम्। मम उदरं बुभुक्षया रौति। कृपया मयि करुणां प्रदर्शयतु'' इति भिक्षुकः अयाचत।

'रे भिक्षो!-राजानं दृष्ट्वा साक्षात् रोदनमेव आरब्धवान्। राजानं प्रति उपायनीकर्तुं स्वस्य दुःखमयीं कथां विहाय अन्यत् किमपि नास्ति किं तव समीपे? मह्यं किमपि प्रयच्छ'' इत्युक्त्वा राजा हस्तौ प्रसार्य अतिष्ठत्, नेत्रे सलीलम् इव।

इदमनपेक्षितं किमभवत् इति भिक्षुकः चकितचकितो जातः। विस्मितः एव सः पात्रे वर्तमानात् तण्डुलात् विगणय्य पञ्च व्रीहीन् एव निष्कास्य राज्ञः हस्ते अस्थापयत्।

राजा उच्चैः विहस्य भिक्षुकाय किमपि अदत्त्वा एव ततो निर्गतः।

भग्नमनाः भिक्षुकः आतृप्ति राज्ञः कृपणतां भर्त्सयित्वा भिक्षां याचितुं स्वमार्गमन्ववर्तत।

गोरजमुहूर्ते गृहं प्रत्यागतः भिक्षुकः द्वारे तण्डुलगोणीमपश्यत्। सः मनसि अचिन्तयत्, 'अवश्यं कश्चन दयालुः मनुष्यः इदमत्र न्यस्तवान् अस्ति मम कृते'। गोणीं गृहे आकर्ष्य सः मुष्टिमितान् तण्डुलान् उदाहरत्। अहो आश्चर्यम्! तत्र प्राप्तः स्वर्णखण्डः! भिक्षुकः अवगतवान् यत् राज्ञा स्वयमेव सा गोणी भिक्षुकस्य कृते तत्र निक्षिप्ता स्यात्।

'न जाने अन्यत् किं स्यात् गोण्याम्?' इति विचिन्त्य भिक्षुकः गोण्याः सर्वानपि तण्डुलान् भूमौ उदसर्जयत्। तेषु चत्वारः स्वर्णखण्डाः आसन्। इत्युक्ते आहत्य पञ्च स्वर्णखण्डाः आसन् भिक्षुकेन राज्ञे दत्तानां पञ्च तण्डुलानाम् कृते।

'राजा नैव कृपणः। अहमेव कृपणः। यद्यहं पात्रस्थान् सर्वानपि तण्डुलान् राज्ञे समार्पिमिष्मत् तावानेव धनिकतरः अभविष्यम्' इति निःश्वस्य भिक्षुकः अचिन्तयत्।





# भैरवशास्त्री

**पू**र्वम् कदाचित् कलिङ्गदेशस्य अधिपतिः मणिभद्रः आसीत्। तस्य मन्त्री इन्दुशर्मा अतीव बुद्धिमान् आसीत्। महाराजस्य सर्वेऽपि सेवकाः मन्त्रिणः कर्मचारिणः च तस्य आधीनाः आसन्। अतः राजकार्यं निर्विघ्नं प्रचलति स्म। भूपं रञ्जयितुम् एको भैरवशास्त्री नाम्नः जनः नियुक्तः आसीत्। राजा यदा विश्राममम् कुर्वन् भवति स्म तदा भैरवः तमुपगम्य तस्य रञ्जनं करोति स्म। राजानम् विहाय सः कान् अपि अन्यान् न विगणयति स्म। सः चिन्तयति स्म यत् यावत् राजा अनुकूलः तावत् अन्यस्य कस्यापि चिन्ता न करणीया। एवम् सः अन्यैः सर्वैः मन्त्रिभिः सह अपि दुराचरणं कर्तुमारभत। एतत् विलोक्य मन्त्री इन्दुशर्मा क्रोधमुपगतः। सः भैरवम् सम्यक् पाठं पाठयितुं निश्चितवान्। राजप्रासादस्य द्वारपालम् आहूय इन्दुशर्मा तमवदत्, ''श्वः आरभ्य भैरवशास्त्री राजप्रासादं प्रवेष्टुम् न अनुमन्तव्यः'' इति।

अन्येद्युः यदा भैरवशास्त्री महाराजस्य दर्शनार्थम् आगच्छत् तदा द्वारपालः तमवदत्, ''न भवान् अन्तः गन्तुमर्हति। भवान् अवरोद्धव्यः इति कथितः अहम्। तच्छ्रुत्वा सम्भ्रान्तः भैरवः 'काऽपि योजना अस्ति माम् अवरोद्धुम्' इति अचिन्तयत्। पूर्वस्मिन् दिने अपि महाराजः तेन सह प्रेम्णा सम्भाषणं न अकरोत्। किं जातं स्यात् इति अवगन्तुम् एव सः असमर्थः। अतः सः महाराजम् एव एकम् पत्रं लेखितुम् अचिन्तयत्। तेन लिखितम्, ''भोः

चिदानन्दः

महाराज! किमर्थम् अहम् भवता सह मेलितुं न शक्नोमि? किमर्थमहम् एवम् दण्डितः?उच्यताम् कुतः अहम् अपराधी? कृपया कथयतु मह्यं किं वा मया अपराद्धम्। कथयतु मम अपराधं यं ज्ञात्त्वा अहं प्रायश्चित्तम् स्वीकुर्याम्।'' एवम् एकम् पत्रम् लिखित्वा सः तत् महाराजं प्रति प्रैषयत्। इदम् पत्रम् मन्त्रिणा लब्धम्। तेन तु तत् दूरे क्षिप्तम्। परम् अत्र भैरवः पत्रस्योत्तरम् प्रतीक्षमाणः आसीत्। तत्र भैरवम् प्रतीक्षमाणः राजा अन्ते स्वसेवकान् अपृच्छत् ''साम्प्रतम् भैरवो न दृश्यते, किमर्थम्? किम् प्रवृत्तम्?'' किन्तु यं कमपि राजा पृष्टवान् सः 'अहम् अस्य विषये अनभिज्ञः' इत्येव उदतरत। यदा मन्त्री अपि एतद्विषये पृष्टः तदा सः आगत्य राजानम् अवदत् ''हे महाप्रभो! भैरवः क्षतिग्रस्तः जातः आसीत्, ह्यः रात्रावेव स मृत्युमुपगतः अस्ति। अहम् तस्यैव अन्त्येष्टिम् क्रियाकर्माणि च कृत्वा इदानीमेव आगच्छन् अस्मि'' इति। तत्र राज्ञः उत्तरं प्रतीक्षमाणेन भैरवेण यदा राज्ञः सकाशात् न किमपि उत्तरम् प्राप्तम् तदा एतत् आकलितम् यत् तस्य पत्रं राज्ञः पर्यन्तं न प्राप्तम् एव। राजप्रासादे मम किमपि मित्रम् न अस्ति अतः यदा राजा प्रासादात् बहिः आगमिष्यति तदा प्रत्यक्षम् एव तेन साकम् मेलिष्यामि इति विचिन्त्य सः भैरवः सुयोग्यम् अवसरम् प्रतीक्षमाणः अतिष्ठत्। एकस्मिन् दिने सायङ्काले राजा सः मन्त्री केचन सभासदः च अश्वान् आरुह्य मृगयार्थम् प्रायान्। नातिदूरम्



भैरवशास्त्रिणम् दृष्ट्वा राजा अतीव विस्मयम् गतः।मन्त्री तज्ज्ञात्वा विना विलम्बम् सङ्कोचं विना च अवदत् ''आम् एषः भैरवशास्त्री एव। परं न जीवितः,अपि तु मृतः। पिशाचः भूत्वा स्थितः अस्ति एषः। अन्यैः मन्त्रिभिः अपि इन्दुशर्मणा सह सहमतिः प्रदर्शिता। ''महाराज! सत्यम् एव एतत्। यतः स यो दृश्यते स भैरवशास्त्री नास्ति अपि तु तस्य पिशाचरूपी भैरवशास्त्रीवर्यः। इमानि वचांसि भैरवशास्त्रिणः श्रुतिपथम् आगतानि तदा तेन स्वदोषः ज्ञातः। तेन एकस्मिन् कर्गजे एकः श्लोकः लिखितः स च कर्गजः प्रतिगच्छतः राज्ञः हस्ते दत्तः।

राज्ञा प्रत्यागत्य सः श्लोकः पठितः।

राष्ट्र सेव्यो नृपः सेव्यः
न सेव्यः केवलो नृपः।
राष्ट्रवक्रप्रभावेण
भैरवो भूततां गतः।।

(राज्ञा सह तस्य राजसभासदः अपि सेवितव्याः। केवलं राजा न सेवितव्यः। यतः सभासदानां कृपाम् अलब्ध्वा भैरवः जीवन्नपि मृतो इति मतः, सः पिशाचः इति मतः।) तं श्लोकम् पठित्वा राज्ञा समग्रा परिस्थितिः ज्ञाता। तेन स्वमन्त्रिणः पृष्टाः ''किं भवद्भिः सर्वैः अलीकम् उक्तम् यत् भैरवशास्त्री निधनं प्राप्तः इति?''

मन्त्रिणा इन्दुशर्मणा यद्यद् यथा च प्रवृत्तम् तत् तत् सर्वं राज्ञे कथितम्। एकस्य विदूषकस्य कारणेन समर्थः मन्त्री अपगमनीयः इति राज्यस्य कृते न कदापि लाभाय कल्पते। अतः राज्ञा किमपि नैव उक्तम् परम् एतदवश्यम् उक्तम् यत् ''तस्मै विदूषकाय भैरवशास्त्रिणे सेवावसरः अवश्यं पुनः प्रत्यर्पणीयः'' इति। अधुना तु भैरवशास्त्री अपि सर्वेषाम् मन्त्रिणाम् अन्येषां च कर्मचारिणाम् आदरं कुर्वन् स्वमर्यादाम् अनुल्लङ्घ्य राजानम् सेवमानोऽभूत्।





# वीरेन्द्रस्य लेखनपुस्तिका

लकड्पुरं नाम ग्रामे वीरेन्द्रः नाम एकः उद्यानपालः निवसति स्म। वीरेन्द्रः शाकोत्पादने अतीव प्रवीणः आसीत्। तस्य क्षेत्रभूमिः यद्यपि अल्पा तथापि नैकविधानि औषधानि उपयुज्य सः बहूनि शाकानि उत्पादयति स्म। तस्मात् सः भृशं धनम् अपि लभते स्म। तस्मात् एव धनात् सः स्वस्य उदरनिर्वाहं कृत्वा सुखेन वसन् आसीत्। उद्याने रोपितेषु शाकेषु तस्य एतावान् स्नेहः आसीत् यत् सः प्रेम्णा शाकानां नामकरणम् अपि कृत्वा तानि सः नाम्ना आह्वयति स्म अपि।

तस्मिन् एव ग्रामे इतोऽपि एकः उद्यानपालः आसीत् भरतः नाम । तस्य क्षेत्रभूमिः वीरेन्द्रस्य अपेक्षया अधिकं विस्तीर्णा सस्यप्रदा च आसीत्। परं सः सर्वदा धनार्जने एव मग्नः भवति स्म। शाकानि उत्तमरीत्या न वपति स्म। शाकोत्पादने तस्य अधिका रुचिः अपि नासीत्। तेन वीरेन्द्रः शाकेभ्यः यावत् धनं लभते स्म तावद् अपि सः न लभते स्म।

"त्वं तु साक्षरः असि। सः वीरेन्द्रः तु मूर्खः निरक्षरः च। परं किं वा तेन? सः यथा शाकोत्पादनं करोति तथा त्वं तु शाकोत्पादनं कर्तुं न शक्नोषि।" एवं सर्वे ग्रामस्थाः भरतम् उपहसन्ति स्म।

एकस्मिन् वर्षे वीरेन्द्रस्य उद्याने महत्यः अलाबवः उत्पादिताः अभवन्। एतावान् महान् तुम्बः पूर्वं न कदापि केनापि दृष्टः आसीत्। वीरेन्द्रस्य तु परमानन्दः जातः। सः प्रेम्णा

आर्. शकुन्तला

तुम्बानां नामानि स्थापितवान्। ऐरावतः, गुडघटः, महालक्ष्मीः, अग्रजा, सुवर्णा एवं नानाविधैः नामभिः सः तान् सम्बोधयति स्म। तस्मिन् वर्षे एवं ४० तुम्बाः उत्पादिताः। अन्यस्मिन् दिने हट्टदिवसः आसीत्। अतः पूर्वदिवसे सायङ्काले उद्यानं गत्वा ये तुम्बाः विपणिं नेतव्याः सन्ति तेषाम् उपरि चिह्नम् कृतवान्। 'श्वः शकटेन सर्वान् नयामि' इति व्यचिन्तयत् सः। तस्यां रात्रौ तेन निद्रा न प्राप्ता। यथा पुत्री विवाहं कृत्वा पतिगृहं गच्छति तथा तुम्बाः विपणिं गच्छन्ति इति सः दुखम् अन्वभवत्।

अन्यस्मिन् दिने प्रभाते सः शकटं सिद्धं कृत्वा उद्यानम् आगतः। यदा सः उद्यानं प्राप्तः तदा तस्य हृदयं तत्रस्थेन दृश्येन रुद्धम् इव। कश्चन सर्वान् तुम्बान् उत्पाट्य नीतवान् आसीत्। वीरेन्द्रः उन्मत्तः इव जातः। दीर्घकालं यावत् सः अत्र तत्र भ्रमन् आसीत्। मनसि एव सः चोराय बहूनि दूषणानि दत्तवान्। स्वस्य दुर्भाग्येन च दुखितः अभवत्।

अकस्मात् तस्य मनसि विचारः प्रस्फुरितः। न तु एकं अथवा द्वयं अपि तु ४० तुम्बाः सन्ति। 'कुत्र वा गताः? कश्चन कथं वा नीतवान् स्यात् तथा च कुत्र वा नयेत् सः? विपणिम् एव नयेत्। अहं तु तान् कुत्रापि परिचेतुं शक्नुयात्।' विचिन्तयत् सः।

अनुक्षणं सः शकटम् आरुह्य विपणिं गतः। तत्रत्यानि शाकापणानि सः निरीक्षितवान्।



एकस्मिन् आपणे सः राशिरचितान् सर्वान् तुम्बान् दृष्टवान्। सत्वरं गत्वा सः आपणिकम् अपृच्छत्, "किं भोः एतत्? चौर्यं किमर्थं कृतम्? मम तुम्बान् चोरयित्वा स्वस्य आपणे विक्रीणानः असि?"

आपणिकः तु सम्भ्रमितः। "तव ग्रामस्थः भरतः एव मह्यम् एतान् विक्रीय दशरूप्यकाणि स्वीकृत्य गतः" प्रत्युदतरत् आपणिकः।

"भरतः न कुत्रापि गतः। अत्र एव कस्मिंश्चित् आपणे स्यात्।" पार्श्वस्थः आपणिकः अवदत्।

वीरेन्द्रः विपण्याम् उपस्थितेन अधिकारिणा मिलित्वा तम् उक्तवान् यत् "मम तुम्बाः उद्यानपालेन भरतेन अत्र आगत्य विक्रीताः सन्ति" इति। तावति काले केचन जनाः भरतं तत्र उपस्थापयन्। अधिकारी अपि तत्र आगतः।

"एते तुम्बाः तव एव इति त्वया कथं ज्ञातम्?" अधिकारी वीरेन्द्रम् अपृच्छत्।

"कथं वा अहम् एतान् न जानामि? अहम् एव तान् पालितवान्, वर्धितवान् अस्मि। पश्यतु एषा महालक्ष्मीः, एषः ऐरावतः" एवं प्रत्येकं सः नाम्ना आह्वयत्।

तत्र सम्मिलिताः सर्वे जनाः तस्य उन्मत्तताम् अहसन्। अधिकारी अपि हसन् अवोचत्, "त्वं स्वस्य तुम्बं परिचितवान्, किन्तु एतत् न पर्याप्तम्। कश्चन साक्षी आवश्यकः यः एते तुम्बाः तव सन्ति इति



वक्तुं शक्नुयात्।'' हा हन्त! वराकः वीरेन्द्रः तु सम्भ्रान्तः जातः।

अधिकारी भरतम् अपृच्छत्, ''किं भोः, एषः वीरेन्द्रः तु वदन् अस्ति यत् त्वम् अस्य तुम्बान् चोरितवान्। किं त्वया अङ्गीक्रियते एतत्?''

''मम समीपे पुस्तिका अस्ति यत्र अहं कति बीजानि उप्तानि, कति विक्रीतानि तस्य लेखनं कृतवान् अस्मि। यदि भवान् वदति तर्हि अहं ताम् इदानीम् एव आगत्य दर्शयामि।'' भरतः अवदत्।

एतत् श्रुत्वा वीरेन्द्रः अगदत्, ''एते तुम्बाः मम सन्ति तद् दर्शयितुं मम समीपे अपि एका लेखन-पुस्तिका अस्ति। अहम् अपि ताम् आनयामि'' इति। तत् श्रुत्वा भरतः अट्टहासं कृतवान्।

अधिकारी तौ सैनिकैः सह ग्रामं प्रेषितवान्। किञ्चित् समयानन्तरं द्वौ अपि प्रत्यागतौ। भरतः स्व-लेखनपुस्तिकाम् आनीतवान् वीरेन्द्रः अपि वस्त्रे बद्ध्वा किमपि आनीतवान्।

भरतस्य लेखनपुस्तिकायाम् आसीत् यत् तेन ४० तुम्बाः उत्पाटिताः विपणिम् आगत्य विक्रीताः च इति।

''तव गणना का?'' इति अधिकारी वीरेन्द्रम् अपृच्छत्।

वीरेन्द्रः वस्त्रे बद्धान् ४० तुम्ब-नालान् निष्कास्य अवदत्, ''आर्य, एषा मम टिप्पणिः।'' सः प्रत्येकस्मिन् तुम्बे एकैकं नालं तथा योजितवान् येन लघुबालः अपि ज्ञातुं शक्नुयात् यत् एते तुम्बाः वीरेन्द्रस्य एव सन्ति। सर्वे नालाः तुम्बैः सह सुष्ठु सङ्गताः।

विना विलम्बं अधिकारी भरतम् आदिशत् यत् 'तेन वीरेन्द्राय ४० तुम्बानां धनं दातव्यम्' इति। तस्मात् दिनात् आरभ्य सर्वे ग्रामस्थाः भरतं 'तुम्बचौरः' इति नाम्ना आह्वयन्ति स्म।





# योग्यः व्यवस्थापकः

पुरा कदाचित् यादवनामा कश्चन वणिक् सुलियापुरे वसति स्म। नगरे सः धान्यं विक्रीणीते स्म। अनस्थानव्ययशीलश्च सः अस्माद्व्यापारात् किञ्चित् धनसञ्चयनमपि कर्तुं शक्नोति स्म।

स्ववाणिज्यविवर्धिषया यादवः कमपि अर्हं जनं व्यवस्थापकत्वेन नियोजयितुम् इच्छति स्म। अथैकदा सायङ्काले सः ग्रामसभास्थले तस्य मित्रं कृष्णम् अपश्यत् तेन सह च एनम् अंशम् अन्तरा अमन्त्रयत्।

स्वल्पं समयं यावत् विमृश्य कृष्णः अवदत्, ''अहं द्वौ युवानौ परिचिनोमि, यौ भूस्वामिनः कार्यालये कार्यं कुरुतः। तयोः अन्यतरस्य योजनं शक्यते।''

स्मयमानः यादवः तस्य वचनम् श्रुत्वा अवदत्, ''साधु! पूर्वम् अहं द्वयोः परीक्षां कर्तुम् इच्छामि। किं त्वं तौ तव गृहं निष्प्रयोजनमेव आह्वातुं शक्नोषि?'' इति। कृष्णः तस्य प्रार्थनाम् अन्वमन्यत।

दिनद्वयानन्तरं तौ युवानौ शिवज्ञानेन्द्राभिधानौ कृष्णगृहम् आगतौ। पूर्वचिन्तनानुगुणं यादवोऽपि तस्मिन्नेव समये कृष्णस्य गृहम् आयातः। शिवज्ञानेन्द्रौ कृष्णगृहस्य द्वारप्रकोष्ठशालायां कृष्णेन सह उपविष्टौ अष्टपदक्रीडां कुरुतः स्म।

स्वल्पकालादेव कृष्णम् उद्दिश्य चिन्तायुक्तस्वरेण यादवः अवदत्, ''क्रय्यवस्तूनां मूल्यं नभः स्पृशतीव। आगामिकाले योगक्षेमं सुतरां कठिनं मन्ये।'' कृष्णोऽपि सहमतिं प्रादर्शयत्।

जी. प्रियाराणी



इत्थं तयोः सम्भाषमाणयोः शिवः अब्रवीत्, ''वर्धमानं मूल्यं न वास्तविकं चिन्ताकारणम्। साम्प्रतं तु धनार्जनार्थं नैके अवसराः सन्ति।''

तूष्णीं स्थितं ज्ञानेन्द्रम् अवलोक्य तन्मतजिज्ञासुः यादवः तम् अपृच्छत्, ''किं ते मतम् अस्मिन् विषये?''

ज्ञानेन्द्रः सकृत् निश्वस्य अवदत्, ''अहं शिवस्य मतेन सहमतो नास्मि। तस्य मतानुगुणं कृतेऽपि प्रयत्ने वस्तुमूल्यं नियन्त्रणे न भवति चेत् किं कर्तव्यं ततः परम्? तदपेक्षया किं वयम् अस्माकम् इच्छां नियन्तुं न शक्नुमः? यदि वयम् अस्माकं व्ययशक्तिम् अतिक्रम्य भोगान् उपभोकुम् इच्छामः तर्हि अनन्तोऽपि आयः अस्माकं परितुष्ट्यै न भवेत्।''

ततः यादवः अवदत्, ''गच्छता कालेन जगदिदम् अन्यायपूर्णं जायमानमस्ति। सामान्यजनस्य जीवनं नितरां दुःशकं जायमानमस्ति। श्रीमन्तः सामर्थ्यवन्तश्च जनाः निर्धनान् दुर्बलान् च सम्पीडयन्तः पदाघातैः दलयन्तीव। कदा नु खल्वेषा दुरवस्था नश्येत्?''

तच्छ्रुत्वा 'अहो बालिशोऽयं विचारः!' इत्येवं मन्यमानः इव शिवः अहसत् अवदच्च, ''सर्वस्यापि जगतः प्रवृत्तिपरिवर्तनम् अनपेक्ष्य पुरुषेण आत्मन एव प्रवृत्तिः दृष्टिर्वा परिवर्तनीया। कस्माच्चित् हठात् तथा प्रयत्नः क्रियते चेत् जनाः तस्मात् भीताः भवन्ति।''

ज्ञानेन्द्रः तद्वचनं श्रुत्वा अस्मयत अब्रवीच्च, ''पुनरपि नास्मि सहमतोऽहम्। बलापेक्षयापि विवेकस्य आवश्यकता महत्तरा। दोर्बलेन सर्वम् इष्टं साधयितुं शक्यमिति चिन्तनं मूर्खतालक्षणम्। प्रत्येकं जनः सदसद्विवेकवान्। सर्वोऽपि तमेव विवेकं सर्वेषु व्यापारेषु प्रमाणं मन्यते चेदपि पर्याप्तम्।''

एवं सम्भाषमाणेषु तेषु कृष्णगृहात् नातिदूरं विद्यमानात् ग्रामसभास्थानात् तैः कश्चन कोलाहलः श्रुतः। यादवः कृष्णश्च तत्र गन्तुं प्रस्थितौ। शिवज्ञानेन्द्रौ च तौ अन्वसरताम्।

सर्वोऽपि ग्रामः सभास्थले सम्मिलितः भूत्वा द्वयोः पुरुषयोः वादप्रतिवादान् शृण्वन्नासीत्।

यादवः अवदत्, ''रङ्गः मम महिषीम् चोरयित्वा आपणे विक्रीतवान् इति वीरस्य आरोपः।'' रङ्गश्च तम् आरोपं निराकरोति। अयं कलहः गतदिनद्वयं यावत् प्रचलति। युवाम् अधीतविद्यौ। विश्वव्यवहारं च जानीथः। अतः युवयोः बुद्धिबलेन 'कोऽस्मिन् व्यतिकरे दोषभाक्?' इति निर्णेतुं शक्नुथः किम्?''

तत्र शिवः स्कन्धचालनेन किमपि वक्तुम् असमर्थतां प्रादर्शयत्। ज्ञानेन्द्रश्च निमिषं यावत् संविचार्य सात्मविश्वासं निर्णयम् उदघोषयत्, ''वीरस्य आरोपः योग्यः। रङ्गः एव तस्य महिषीम् अचोरयत्। एतत् तथ्यं भवतां सर्वेषां गोचरं भवेत् नातिचिरेण।''

शीघ्रमेव रङ्गेण वीरस्य महिषी चोरिता आपणे च न्यूनमूल्येन विक्रीता इति सिद्धम् अभवत्। ग्रामरक्षकाः रङ्गं बन्दिग्राहं कृत्वा ततः अनयन्।

गृहं प्रत्यागच्छता यादवेन ज्ञानेन्द्रः तस्य निर्णयविषये पृष्टः।

सोऽब्रवीत्, ''दोषी जनः वादप्रतिवादेषु सर्वदा उच्चैः भाषते, 'मम संयमितेन प्रतिवादेन मम दोषः प्रकाशं गच्छेत्' इति भीत्या। निर्दोषस्तावत् उद्वेगं विनैव स्वपक्षं प्रतिपादयति तस्य दोषराहित्यात्। रङ्गस्य सोद्वेगं निरर्गलं वाक्यभेदयुतं वचनमेव तस्य दोषस्य परमं प्रमाणम् आसीत्। तदाकर्ण्य यादवः अत्यानन्देन ज्ञानेन्द्रम् अभ्यनन्दयत्। यादवः अचिन्तयत् 'यत् केवलं शिक्षणं सामाजिकस्तरः आयः चेत्यादयः एव पुरुषस्य अर्हानर्हतयोः प्रमाणं न। सांसारिकव्यवहाराणाम् उत्तमम् अवगमनम् अनुशासनबद्धं जीवनं निर्णयक्षमता चेति ज्ञानेन्द्रस्य अन्येभ्यो व्यवच्छेदकगुणाः' इति यादवः चिन्तनान्ते निरणयत्।

ज्ञानेन्द्रस्य एतैः गुणविशेषैः नितरां प्रभावितः यादवः तस्यैव वाणिज्यव्यवस्थापकत्वेन निरचिनोत्।





# योग्यदण्ड:

घण्टानाद: अभवत्। चन्दनमहोदय: सप्तमीं कक्षां प्रविष्टवान्। उपस्थिति-पत्रं पूरितं तेन। यदा तेन अरुणाया: नाम उच्चारितं तदा न किमपि प्रत्युत्तरं प्राप्तम्। तेन छात्रा: पृष्टा:- ''अपि जानन्ति किमर्थं न आगता अरुणा?'' सर्वे 'न' इति उक्तवन्त:। किन्तु वनिता उत्थिता अवदत् च-''अध्यापक, अहं जानामि तस्या: अनुपस्थिते: कारणम्।''

तया प्रतिवेशिन: किमपि वस्तु चोरितम्। तया तद् हृतम् परन्तु चौर्यकर्म न अङ्गीकृतम्। अत: तै: प्रतिवेशिभि: सर्व: वृत्तान्त: आरक्षकाय कथित:। प्रसङ्गेनानेन तस्या: गृहजना: अपि अपमानिता:। अत: लज्जीभूता सा पाठशालां न आगता'' इति उक्त्वा वनिता उपविष्टा। कक्षायां प्रमथितै: छात्रै: कर्णजाप: आरब्ध:। दिनद्वयं वा ततोऽपि अधिकमेव अरुणा पाठशालां न आगतवती। अत: सर्वै: वनिताया: वचने विश्वसितम्।

विरामानन्तरं पाठशालाम् आगता अरुणा किमपि न जातमिव आचरति। तेन सर्वे विस्मिता: अभवन्। चन्दन: अध्यापक: प्रतिदिनं प्रथमतासिकायां पाठयति स्म। दृष्टायामरुणायां स: अवदत्,''वयं जानीम: त्वया किं कृतम् इति। दिनद्वयस्य अनुपस्थिते: कारणं किम्?'' चन्दन-अध्यापकेन पृष्टम् इदम्।

''तत्..... अहं....'' अरुणा वक्तुं प्रायतत।

''वनिते, कृपया उत्तिष्ठ। भो: छात्रा:, किं उच्यते युष्माभि:? वनिताया:

के.के.रघुनन्दन:

कथनमनुसृत्य न वा एषः दोषः दण्डनीयः? तर्हि वनितां दण्डयेम वा?'' इति उक्त्वा शिक्षकेण प्रतिक्रियां द्रष्टुं सर्वेषां वदनानि निरीक्षितानि।

सम्भ्रमितैः तैः पृष्टम्-''महोदय, यदि अरुणा अपराधिनी तर्हि किमर्थं वनिता दण्डनीया?''

''सत्यम्। वनितायाः एव दोषः एषः। यतः तया अरुणया कृतं कार्यं दोषः इव दर्शितम्। अतः सा एव दण्डनीया।'' इति उक्ते अध्यापके छात्राः चकितचकिताः अभवन्। अध्यापकः अगदत्,''कारणं तु एतदस्ति। वनिता अरुणायै ईर्ष्यति। अतः सा अरुणायाः अनुपस्थितेः असत्यं कारणं कथयित्वा ताम् अपराधिनीरूपेण सर्वेषां पुरतः प्रस्तुतवती। वस्तुतः तु दिनद्वयम् अरुणा विशिष्ट-जनगणेन सह पूरग्रस्तानां कृते निधि-सङ्ग्रहणं कुर्वती आसीत्।

किन्तु एतत् सर्वं जानती वनिता असत्यम् उक्तवती। तया अरुणा शंसिता। अतः वनिता एव सम्यक् दण्डनीया।'' एतत् श्रुत्वा वनितायाः मुखवर्णः परिलुप्तः।

''वनिते, कस्यापि कृते मनसि ईर्ष्या भवति तथापि तस्य विषये असत्यं न कथयितव्यम्।'' अध्यापकः अग्रे उक्तवान्, ''अरुणा अधिकान् गुणान् प्राप्नोति। अतः तस्याः विषये वनितायाः मनसि ईर्ष्या जनिता। तर्हि कीदृशः दण्डः योग्यः तस्याः कृते?'' इति पृष्ट्वा अध्यापकः छात्राणां प्रत्युत्तरार्थं प्रतीक्षमाणः स्थितः। ततः अवदत् सः- ''वनितया क्षमा याचितव्या। तथा च अरुणायाः अपेक्षया अर्धगुणः तु तया अधिकः प्राप्तव्यः। अन्यथा अहमेव नूनं तां दण्डयेयम्।''

वनितया रोदनम् आरब्धम् अरुणायाः क्षमाऽपि याचिता। छात्राः अध्यापकस्य स्नेहं चातुर्यं च प्राशंसन्।





# मेधावी रमणः

कृष्णदेवरायस्य नाम अजानानः जनः तु न विरलः एव। कृष्णदेवरायस्य कारणादेव विजयनगरसाम्राज्येन असाधारणी कीर्तिः लब्धा। यदा तस्य पिता नरसिंहरायः सिंहासने विराजमानः आसीत् तदा अकस्मादेव तस्य प्रधानमन्त्री दिवंगतः। तदा नरसिंहरायेन एतत् उद्घोषितम् यत् बुद्धिमति जने प्राप्ते सति सः तं मन्त्रिपदे नियुक्तं करिष्यति।

घोषणां श्रुत्वा कतिपयाः जनाः तत्र आगताः परं कस्यापि बुद्धिमत्तया नरसिंहः मनागपि सन्तुष्टः।

अन्ततो गत्वा नरसिंहरायेन एकः उपायः चिन्तितः। तेन कर्गजे अंगुलिचतुष्टयपरिमिता उन्नता एका रेखा मस्याः सहाय्येन अङ्किता। तं च कर्गजं स्वभृत्येभ्यः दत्त्वा उक्तं ''यः कोऽपि इमां रेखाम् अमार्जयित्वा इमां ऱ्हस्वां करिष्यति तं जनं मत्समीपम् आनयत'' इति। सेवकाः तं कर्गजं गृहीत्वा अगच्छन्। यदि कोऽपि बुद्धिमान् जनः भासते तर्हि तं कर्गजं दर्शयित्वा वदन्ति स्म ''किं भवानिमां रेखाम् अमार्जयित्वा ऱ्हस्वां कर्तुं शक्नोति?

केनचित् कथितं ''कथमेतत् सम्भाव्यते?'' अन्यः अवदत् ''किं तव मतिः भ्रष्टा? लिखितरेखाम् अमार्जयित्वा कदापि तां कथं ऱ्हस्वां कर्तुं शक्यते? अपरः वदति ''किं मां दृष्ट्वा उपहासं कर्तुं इच्छति?'' इति

टी. राजगोपालाचारी

इत्थं भ्रमन्तः ते सेवकाः एकं ग्रामं प्राप्ताः। तत्रापि तैः अयमेव प्रश्नः पृष्टः। तस्मिन् ग्रामे तैः एकस्यां पाठशालायां छात्रान् किमपि पाठयन् कश्चन उपाध्यायः दृष्टः। सेवकैः उपाध्यायस्य समीपं गत्वा पृष्टं ''किं भवान् इमां रेखाम् अमार्जयित्वा ऱ्हस्वां कर्तुं शक्नोति?''

तच्छ्रुत्वा तेन उपाध्यायेन उक्तं ''न केवलम् अहम् अपि तु कोऽपि एतत् कर्तुम् असमर्थः एव। कोऽपि ऐन्द्रजालिकः एव एतत् कर्तुं शक्नुयात्'' सेवकाः तच्छ्रुत्त्वा प्रतिनिवृत्ताः।

तस्यां पाठशालायाम् एकः षोडशवर्षीयः बालकः पठति स्म। तस्य नाम आसीत् रमणः। सः उपाध्यायम् अवदत् ''गुरुवर्य! सः कोऽपि ब्रह्मविद्या इव कठिनः प्रश्नः नास्ति किल? तस्याः रेखायाः समीपे एव यदि अन्या दीर्घा रेखा आलिख्यते तर्हि इयं स्वयम् एव ऱ्हस्वा भवेत् ननु?''

अध्यापकः तज्ज्ञात्वा प्रतिगच्छन्तं सेवकम् आह्वयन् अवदत्, ''अयिं भोः दीयतां स कर्गजः। अनन्तरं तेन उपाध्यायेन तस्याः रेखायाः समीपे एव अन्या दीर्घा रेखा आलिखिता उक्तश्च, ''पश्यतु, पूर्वतना रेखा ऱ्हस्वा जाता''।



सपदि आनन्दितैः तैः सेवकैः सः उपाध्यायः प्रणतः। ''वयं महाराजेन नरसिंहरायेन प्रेषिताः स्मः। एतं कर्गजम् अस्मभ्यं दत्त्वा तेन उक्तम् आसीत् यद् यः कोऽपि इमां रेखां ऱ्हस्वां कर्तुं शक्नुयात् सः अस्मत्समीपे आनेतव्यः। बहुभिः अयं कर्गजः दृष्टः परं न केनापि एतत् कार्यम् आसादितम्। वयम् अपि इदमेव चिन्तयन्तः आस्म यत् भवानपि इदं कार्यं कर्तुं न शक्ष्यति। परन्तु भवान् तु अस्मत्कार्यं बुद्ध्या अकरोत्। अधुना भवत्कृते शिबिकाम् आनयामः। भवान् अस्माभिः सह राजधानीम् आगन्तुं सिद्धःभवतु'' एतदुक्त्वा ते सेवकाः प्रत्यागताः।



एतज्ज्ञात्वा उपाध्यायः सन्तुष्टः अभवत्। तेन ग्रामे सर्वेभ्यः कथितं यत् राज्ञा तस्य सम्मानः करिष्यते, तदर्थं तेन राजशिबिकया राजधानीं प्रति गम्यते। यथा निश्चितं स उपाध्यायः शिबिकया गतः अपि।

यदा दूतैः कथितं यत् कथं तेन पाठशालोपाध्यायेन सा रेखा ह्रस्वा कृता, तदा नरसिंहरायः अतीव सन्तुष्टतां गतः। परं स उपाध्यायः तथा बुद्धिमान् न दृश्यते स्म यथा तेन स्वप्रतिमा निर्मिता आसीत्। अतः नरसिंहरायेन तस्य उपाध्यायस्य ज्ञानस्य इतोऽपि एकवारं परीक्षा कृता। राजसभायाम् एकस्यां वेदिकायां नैकाः मुद्राः स्थापिताः। तां वेदिकां परितश्च कतिपयाः तल्पाः स्थापिताः। राज्ञा सः उपाध्यायः राजसभाम् आहूतः।

"प्रायः इदानीम् अपि भवान् एतत् न ज्ञातुं शक्तः यत् किमर्थम् सा रेखा ह्रस्वा कर्तव्या आसीत्? मम कृते मन्त्रिणः आवश्यकता आसीत् अतः मया इदम् उद्घोषितम् आसीत् यत् अस्यां परीक्षायां यः सफ़लो भविष्यति सः एव मम मन्त्री भविता। भवत्पदेन सम्बद्धाः मुद्राः अस्यां वेदिकायां स्थापिताः सन्ति। गत्वा ताः

उपाध्यायस्य आनन्दस्य कोऽपि पारावारः एव नासीत्। सः रमणम् अवदत् "अरे! महाराजः प्रायः अस्मभ्यम् कञ्चन महोपहारं दास्यति इति मे भासते। वस्तुतस्तु अयम् उपहारः त्वया लब्धव्यः परं सम्प्रति अहं गृह्णीयाम्। मन्यतां यदेषा त्वया मह्यं दीयमाना गुरुदक्षिणा अस्ति। कनियान् असि त्वम्। बुद्धिमान् अपि असि त्वं, भविष्यत्काले ईदृशः नैकान् उपहारान् त्वं लप्स्यसे। इदं रहस्यं कस्मै अपि मा कथय।"

रमणेन हसित्वा उक्तं "भवान् किमर्थम् एवं वदति? वस्तुतः भवता एव सा रेखा ह्रस्वा कृता, न मया।"

आनयतु परं तान् तल्पान् अनुल्लङ्घ्य मुद्राः पर्यन्तं गन्तव्यम्।''

स तु उपाध्यायः इदम् विचिन्त्य आगतः आसीत् यत् तस्मै किमपि पारितोषकं दीयते। किन्तु यदा तेन विदितम् यत् तस्मै मन्त्रिपदम् दीयते तदा सः भीत्या अवेपत। सः भीत्या स्वेदक्लिन्नः अभवत्। सः एतत् ज्ञातुम् असमर्थः यत् 'तल्पान् अनुल्लङ्घ्य कथं वा वेदिकापर्यन्तम् गन्तुं शक्यते' इति। राजसभायां ममावमानः भवेत् इति विचिन्त्य सः तत्रैव अतिष्ठत्।

अधुना तु नरसिंहरायस्य मनसि निश्चितिः एव अभवत्। तेन उपाध्यायाय कथितम् ''अरे वृथैव किमर्थम् स्थितः असि? किं त्वं मुद्राः ग्रहीतुं न शक्नोषि?अधुना वद, किं त्वया एव सा रेखा ऱ्हस्वा कृता उत अन्येन केनापि?सत्यम् वद!''

उपाध्यायः सपदि राज्ञः पादयोः निपत्य क्षमाम् याचित्वा अवदत् ''हे महाप्रभो! क्षन्तव्यः अहम्। लोभाविष्टेन मया एतत् अनुचितं कार्यम् आचरितम्। वस्तुतः मम एकेन शिष्येण रमणेन रेखाम् इमां ऱ्हस्वां कर्तुं युक्तिः उक्ता।''

झटिति नरसिंहरायेन तं ग्रामं प्रति इतोऽपि एका शिबिका प्रेषिता रमणश्च आनायितः। राजा तमवदत् ''मया आलिखितां रेखां ऱ्हस्वां कर्तुं युक्तिः त्वयैव कथिता अतः त्वां मन्त्रिपदे नियोजयामि। किन्तु तस्मात्पूर्वं तस्यां वेदिकायां स्थापिताः मुद्राः गृहाण, परं तल्पाः न लङ्घनीयाः।''

रमणः तान् तल्पान् स्वशरीरम् अभितः आवेष्ट्य वेदिकायाः समीपं गत्वा मुद्राः अगृह्णात्। नरसिंहरायः तस्य बुद्धिपाटवेन प्रसन्नः सन् तं मन्त्रिपदे न्ययोजयत्।





# मानवदायित्वम्

**बे**लप्पः लिङ्गप्पः च बाल्यादारभ्य आप्तमित्रे वर्तेते। तावुभावपि सर्वकारीयकार्यालये कार्यं कुरुतः। तयोः वयः अपि समानम्।.प्रायः तयोः विवाहौ अपि एकस्मिन्नेव वर्षे अभवताम्। सम्प्रति तयोः पुत्रौ समानवयस्कौ सहाध्यायिनौ मित्रे च स्तः।

एकस्मिन् दिने लिङ्गप्पः स्वकार्यं समाप्य गृहं प्रत्यागतः। तथा मातरं किमपि पृच्छन्तं स्वपुत्रं साम्बं सः लक्षितवान्। 'जन्मदिनं पुरस्कृत्य शालायां सर्वेभ्यः सहछात्रेभ्यः मधुरवितरणाय सः धनमभ्यर्थयते' इति सः ज्ञातवान्। अनन्तरदिने एव तस्य जन्मदिनोत्सवः। पुत्रस्य अपेक्षया नितरां कुपितः लिंगप्पः ।

''महता वैभवेन जन्मदिनमाचरितुं वयं किं कोट्यधीशाः अथवा लक्षाधिशाः ? भोजने तव ईप्सितं कमपि पदार्थं पक्तुं तव मातरं प्रार्थयस्व'' इति लिङ्गप्पः क्रोधेन तमवदत्।

''परह्यः भवतः मित्रस्य पुत्रः शङ्करः तस्य जन्मदिनावसरे शालाछात्रेभ्यः सर्वेभ्यः मधुरं वितीर्णवान्। किं ते कोट्यधीशाः ?'' इति साम्बः सरोषं पितरमपृच्छत्।

पुत्रेण सह विवादेन प्रयोजनं नास्तीति लिङ्गप्पः अवगतवान्। अतः तं प्रलोभयितुं लिङ्गप्पः सर्वेषां कृते वितरणाय मधुरं क्रीत्वा वृथा धनव्ययापेक्षया, ''तेन धनेन अहं तव प्रियं क्रीडनकमानयामि'' इत्युक्तवान्।

तस्य वचनानि साम्बः अङ्गीकृतवान्। तदनु सः पित्रा सह विपणिं गत्वा तस्य प्रियं क्रीडनकं समानीतवान्। क्रीडनकेन स्वतृप्तिं अकारयत् साम्बः।

बी.व्ही.पट्नाइक

कतिचन दिनानि व्यतीतानि। साम्बः पित्रा सह स्वसहाध्यायी शङ्करः सहछात्रान् कथं सहकरोतीति उक्तवान्। तथा कर्तुं सोऽपि वाञ्छतीति स्वाभिलाषं प्रकाश्य मित्राणां सहाय्यार्थं धनमभ्यर्थितवान्।

लिङ्गप्पः पुत्रस्य वचनानि श्रुत्वा न सर्वथा सन्तुष्टः। कथम अयं निवारणीयः इत्येव चिन्ता तस्य मनः अखेदयत्। तस्य मनः कथञ्चित् परिवर्तनीयमिति प्रायतत। पूर्वतनावसरे आचरितः मार्गः एव तेन आश्रितः अस्मिन् समये। तदर्थं लिङ्गप्पः तस्मै उपायनानि प्रादात्।

स्वस्य पुत्रस्य आचरणविषये चिन्तां कस्मै निवेदयेयम् इति विचारेण सः बेलप्पं दृष्टवान्। अथ लिङ्गप्पः शङ्करस्य व्यवहारः तस्मै क्लेशं जनयतीति बेलप्पाय वक्तुं प्रारभत।



''बेलप्प! तव पुत्रः तस्य सहाध्यायिनां सर्वेषां कृते साहाय्यं कर्तुं प्रयतते इति श्रूयते। किमेतत् सत्यम्?कथं त्वमपि इदृशम् आचरन्तं तं कथं न निवारयसि।जानासि वा एतस्य परिणामम्? यद्येवं तर्हि तव सम्पत्तिः सर्वा अपि अचिरादेव दानधर्मेष्वेव नष्टा भविष्यति। त्वं तस्य क्रियासु जागरूकः असि किम्?'' इति लिङ्गप्पः तमपृच्छत्। तदा बेलप्पः स्वमतं प्रकटयन् प्रत्युदतरत्।

''वस्तुतः मम पुत्रं प्रति अहमेव उक्तवान् यत् यावच्छक्यम् अन्यान् सहकुरु इति। स्वार्थपरत्वशिक्षणं सर्वदा दोषायैव। साहाय्याचरणं दोषाय न भवति। एतत् कुतः त्वं नाङ्गीकरोषि? यावच्छक्ति दरिद्रेभ्यः साहाय्यं मानवदायित्वं भवति'' इति।

लिङ्गप्पः ''सः मूर्खः' इति मत्वा स्वमित्रस्य अभिप्रायं न लक्षितवान्। यद्यपि सः स्वमित्रं किमपि नोक्तवान् तथापि तस्य मनसि तु तस्मिन् द्वेषभावः उदभवत्। अनया विचारसरण्या अयं मूर्खः पुत्रमपि संभ्रामयति । तेन सह मैत्र्या मम पुत्रस्यापि विनाशः भवति इति विचिन्त्य 'शङ्करेण सह मैत्रीं त्यज' इत्यपि सः स्वपुत्रमपि निरदिशत्।

पुत्रौ अवर्धताम्। शङ्करः अध्ययनं समाप्य उद्योगार्थम् सुदूरम् अगच्छत्। बेलप्पः अपि ग्रामं परित्यज्य वार्धक्ये पुत्रस्य सकाशे उषितुम्



अगच्छत्।

कतिचन वर्षाणि व्यतीतानि। शङ्करः कालेन स्वाभ्यासमपि अवर्धयत्। आरम्भतः सः स्ववेतनस्य कञ्चन भागं संरक्ष्य तद्धनं दीनान् सहकर्तुं व्ययीकरोति स्म। यस्मिन् ग्रामे सः अवर्धत तत्रत्यं किञ्चन वृद्धाश्रमस्य विषयं ज्ञात्वा संरक्षितं धनं वृद्धाश्रमाय दातुं सः ऐच्छत्। सः स्वमतं पित्रे अकथयत्।

बेलप्पः महता सन्तोषेण ''जन्मभूमौ उत्तमपुण्यकार्याय सहकरोषि इत्युक्ते तव मातुः एव सेवां करोषि। तदर्थम् अहं सर्वदा त्वाम् अभिनन्दामि एव'' इत्युक्तवान्।

तौ द्वावपि तच्चिन्तनं कार्ये योजयितुं झटिति निश्चितवन्तौ। तौ ग्रामं गत्वा तत्रत्यं वृद्धाश्रमम् अपश्यताम्। तत्रत्येन पुष्पितलताभिः शोभितेन मनोहरेण उद्यानेन तौ स्वागतीकृतौ। तत्रत्याः केचन वृद्धाः उद्याने कार्ये निमग्नाः आसन्।

बेलप्पः उद्यानं गन्तुमैच्छत्। अतः सः स्वपुत्रं प्रबन्धनगणेन सह वर्तालापं कर्तुं प्रेषयित्वा स्वयं तु पुष्पवाटिकां प्राविशत्। सः तत्र एकं वृद्धं लक्षितवान् यः वृक्षान् जलेन सिञ्चन्, पूर्णतया विकसितानि पुष्पाणि एकैकं चित्वा कण्डोले संस्थापयन् च आसीत्। बेलप्पः एतावत्या श्रद्धया कार्यं कुर्वन्तं तं श्लाघयन् ''त्वं एतान् पादपान् स्वपुत्रान् इव महत्या श्रद्धया पालयसि। तव सेवा मानवतां प्रतिबिम्बयति। भगवान् तुभ्यं दीर्घम् आरोग्ययुतं च जीवनं दास्यति'' इति तं वृद्धम् अवदत्।

अभिज्ञातं स्वरं श्रुत्वा तं द्रष्टुं स्वशिरः उदनयत् सः वृद्धः। बेलप्पः तु विस्मितः अभवत्।

सः अभिज्ञातवान् यत् सः वृद्धः स्वबाल्यमित्रं लिङ्गप्पः इति। बेलप्पः तम् आत्महृदयेण अपश्यत्। लिङ्गप्पः अपि तं तथैवापश्यत्। तौ परस्परं कुशलप्रश्नान् कृत्वा भाषमाणौ कस्यचन वृक्षस्य छायां प्राप्तवन्तौ।

''कुतः समागतोऽसि त्वम्'' इति बेलप्पमपृच्छत् लिङ्गप्पः। बेलप्पोऽपि स्वागमनकारणम् अवदत्।

''कश्चन दाता आश्रमं द्रष्टुमागच्छति। तस्य सम्माननाय पुष्पमालां निर्मातुं प्रबन्धनसमितिः मामवदत्। अस्योद्यानस्य पुष्पैः विनिर्मिता माला

कश्चन योग्यपुरुषं सम्मानयितुम् उपकरोति इति नितरां सन्तोषमनुभवामि'' इति महता आनन्देन अवदत् लिङ्गप्पः।

''इदं मामकं योगदानं किमपि नास्ति। सर्वमपि भगवतः कृपा एव। अहं वार्धक्ये स्वीकृतकार्येण नितरां सन्तुष्टोऽस्मि। एकस्मिन् पार्श्वे त्वं वृद्धान् सेवसे अपरेण मार्गेण पुष्पवाटिकामपि वर्धयसि'' बेलप्पः तमवदत्।

''एतत्तु पूर्वं त्वयैव शिक्षितम्। नूतनं किमपि नास्ति। त्वया उक्तं यत् अस्माकं शक्त्यनुगुणं परोपकारः मानवस्य दायित्वं वर्तते इति। अधुना अहं मम कर्तव्यं निर्वहामि'' लिङ्गप्पः स्वमित्राय अकथयत् बाधया।

बेलप्पः तं सान्त्वयितुं प्रयतमानः ''तव परिवारः क्व वर्तते?'' इति तमपृच्छत्।

''यमहं स्वयं स्वार्थजीवनम् अपाठयं सः मम पुत्रः अधुना सुखेन जीवति। मम पाठान् सम्यक् अधीत्य स्वार्थपरः सन् मां मम पत्नीं च वार्धक्ये आश्रमेऽस्मिन् अत्यजत्। सः आवयोः पोषणम् वृथा इति चिन्तयति अधुना। आत्मनः दोषं ज्ञातुं मह्यं एतावान् समयः अपेक्षितः अभवत्। पितृणाम् अनालोचितनिर्णयाः पुत्रान् प्रभावयन्ति इति अधुनैव ज्ञातं मया। त्वं तु तव पुत्रं परोपकारं पाठितवान्। तेनैव त्वं मर्यादापूर्णजीवनं यापयितुं शक्नोषि। तव सदृशैः श्रेष्ठैः रचितः मार्गः अस्मत्सदृशानां ज्ञानाय कल्पते'' इति अश्रुपूर्णवदनेन लिङ्गप्पः अवदत्।

''कष्टानि सर्वदा न भवन्ति। एतत्सर्वं विस्मर। पश्चात्तपेन क्षालिताः तव सर्वे दोषाः इति चिन्तयतु। मम पुत्रः अपि त्वाम् अतीव प्रेम्णा सम्मानेन पश्यति। अतः विनासंकोचम् आगच्छ, अस्माभिः सह मिलित्वा वस'' इति बेलप्पः तमवदत्।

''नैव अहमत्रैव वसामि। तेनैव मम कर्तव्यं पालयितुं शक्नोमि। मध्ये कदाचित् मां मेलितुम् आगच्छ'' इति उक्तवान् लिङ्गप्पः।






# प्रशासनस्य गुह्यम्

**प्र**धानमन्त्री मनीषसिंहः अवन्तिनगरस्य प्रशासनधुरं समर्थतया वहन्नासीत् । प्रजानां रक्षणे हिते च सः दक्षः आसीत् । तेन नैकाः शिक्षणसंस्थाः प्रशिक्षणसंस्थाश्च संस्थापिताः याः समर्थैः चालकैः संचालिताः । एताः संस्थाः उत्तमानां प्रशासकानां शिक्षणस्य उद्देशेन संस्थापिताः आसन् ।

एकस्मिन् वर्षे एतादृश्याः एकस्याः प्रसिद्धायाः संस्थायाः कृते आनन्दः गोविन्दश्च चितौ । गुणानां प्राविण्यस्य च सर्वासु परीक्षासु तौ द्वौ सर्वोत्तमगुणैः उत्तीर्णौ । मुख्याध्यापकस्य संस्तुत्या द्वावपि योग्यप्रशिक्षणादनन्तरं सर्वकारे उच्चपदे नियुक्तौ ।

तयोः प्रत्येकः विभिन्ननगरेषु सर्वकारस्य मुख्याधिकारी रूपेण नियुक्तः । कालान्तरेण मुख्याध्यापकः नारायणजी तयोः कार्यं द्रष्टुम् आवश्यकतानुसारम् उपदेशं च कर्तुमैच्छत् । स प्रथमम् आनन्दस्य कार्यं द्रष्टुं तस्य नगरमगच्छत् ।

आनन्देन आदरेण तस्य प्रियशिक्षकस्य स्वागतं कृतम् । नारायणमहोदयस्य सत्कारं कृत्वा प्रवासोत्तरं तस्य विश्रान्त्यर्थं यद् यद् आवश्यकं तत् सर्वं सुस्थापितम् । ततः आनन्दः नारायणमहोदयं स्वकार्यालयम् अनयत् । नारायणमहोदयेन तत्रस्थाः कर्मचारिणः तेषां कार्यक्रमश्च अवलोकितः । तेन ज्ञातं यत् आनन्दः उद्विग्नः दृश्यते । सः सर्वदा अधीरतया कर्मचारिभिः सह वदति निर्णयमपि झटिति न स्वीकरोति ।

नारायणजी अपृच्छत्, कुमार, कथं प्रचलति तव कार्यम् ? आनन्दः प्रत्यवदत्, मम

सी.यु.के.एल्. साई प्रशान्ती

कर्मचारिणां कार्यविषये अनास्था भवति । तस्मात् कार्यं न भवति अहं च उद्विग्नो भवामि।

नारायणजी अवदत्, अस्तु तावत्, गोविन्दस्य कार्यालयं गच्छामः।मया सह चल।

गोविन्दोऽपि नारायणमहोदयं वर्गमित्रं च दृष्ट्वा सन्तुष्टः आसीत् । सः आनन्देन तयोः सत्कारमकरोत् । गोविन्दस्य कार्यालये सर्वे कर्मचारिणः उत्साहिनः चपलाः च आसन् । नारायणमहोदयेन आनन्देन च अवलोकितं यत् गोविन्दः सर्वैः सह उद्वेगेन विना सुखेन वार्तालापम् अकरोत् । गोविन्दस्य कार्येण सः श्रान्तः अपि नासीत् । नारायणजी तस्य प्रशासनं सूक्ष्मतया अवलोकितवान्।

प्रत्यागमनसमये आनन्दः नारायणमहोदयेन सह अवदत् तस्य मतं सूचनाः च अपृच्छत् । नारायणजी प्रत्यवदत् , कुमार, युवयोः द्वयोरपि बुद्धिमत्ता सामर्थ्यं च तुल्यमस्ति । किन्तु यदा जनः उच्चस्थाने भवति, तदा तेन स्वस्य कर्मचारिणः सम्यक्तया चेतव्याः । योग्यस्थाने योग्याः पात्राः एव नियोक्तव्याः । नियुक्तिः अतीव महत्वपूर्णा । यदा कस्यापि कर्मचारिणः काठिन्यं भवति, तत् चर्चितुम् अवसरः मुक्तता च तेन प्राप्तव्या ।

तन्नाम तव कर्मचारिणः भीत्या आदरं दर्शयन्ति आज्ञापालनं च कुर्वन्ति । गोविन्दः तु कर्मचारिभ्यः मैत्रीभावं प्रदर्श्य तेषां सामर्थ्यस्य अधिकतमम् उपयोगं करोति । तान् आवश्यकस्वातन्त्र्यं दत्त्वा तेषां प्रति आस्थां प्रदर्शयति । तस्य आज्ञापालनं प्रेमादरात् कुर्वन्ति। यः अधिकारी कर्मचारिणां सुखदुःखविषये कष्टान् प्रति च जागरुकः भवति, स तेषां सहयोगं निश्चयेन आप्नोति । एतदेव गुह्यं प्रशासनस्य । मन्ये एतज्ज्ञात्वा तव समस्यायाः निराकरणं त्वं कुर्याः ।

विचारी आनन्दः नारायणमहोदयाय हार्दिकधन्यवादान् अयच्छत् ।



# किमेतेन मम ?

श्यामराव: तस्य पत्नी च बहुवर्षाणि यावत् विवाहबद्धौ आस्तां तथापि प्रत्येकस्मिन् अवसरे तस्य पत्नी विमला तेन सह तुच्छकारणै: कलहं कुर्वती आसीत्। तस्या: स्वभावविषये अनासक्त: स: तस्या: रोषं शान्ततया सहमान: आसीत्।

एकस्मिन् दिवसे तयो: वार्षिकविवाहदिनमासीत्। यदा विमला श्यामरावं तस्य विषये स्मारितवती तदा स: तां रात्रिभोजनाय मिष्टान्नं साधयितुं प्रार्थितवान्। किन्तु यथानित्यं तया कलह: प्रारब्ध: उक्तं च यत् 'विवाहानन्तरं तया तस्या: पितृगृहात् कानि कानि वस्तूनि आनीतानि। तस्या: पित्रा विवाहाय कियान् धनव्यय: कृत:' इति। अन्ते कलहम् असहमान: श्यामराव: अपि तया सह कलहमारभत। तस्मिन् दिवसे श्यामराव: तस्य मनोद्वेगस्य उच्चाङ्कं प्राप्तवान्।

तस्यां रात्रौ विमला कमपि विचित्रं ध्वनिं श्रुत्वा उत्थिता। तया शङ्कितं यत् गृहं कोऽपि प्रविष्ट:। गृहे चोर्यं भवेत् इति तस्या: भीतिरासीत्। सा श्यामरावम् जागरयितुं प्रायतत किन्तु तयो: कलहेन इतोऽपि उद्वेजित: स: उक्तवान्- ''किमेतेन मम ? गृहे प्राय: सर्वेषु तव स्वामित्वम्। तर्हि तस्य चिन्ता किमर्थं मया कर्तव्या ?'' इत्युक्त्वा स: पराङ्मुख: भूत्वा निद्रां गत:।

*- महावीर नाना*






# शिथिलालयः - २८

*(शिखिमुखिनः दलं रात्रिं यापयितुं कञ्चन द्वीपं समाश्रयत्। शिथिलालयार्चकस्य सेवकः तेषां नौके निमज्जयितुम् आयातः, नागसोमेन च प्राणघातं हतः। ततः परं चत्वारि दिनानि यावत् यात्रां कृत्वा ते सर्वे वृश्चिकद्वीपं समागताः। तत्र शिखिमुखिना विक्रमकेसरिणा च किञ्चित् उध्वस्तं मन्दिरं दृष्टम्। ततः अग्रे...)*

**प**र्वतशिखरात् शिखिमुखिना विक्रमकेसरिणा च यत् मन्दिरं दृष्टम् आसीत्, तत्प्रति उभावपि महता हर्षेण प्रस्थितौ। महता श्रमेण बह्वीः विपदः च सोढ्वा तौ वृश्चिकद्वीपम् आगतौ। इतोऽपि अधिकानि सङ्कटानि अपेक्षमाणौ तौ अत्रागत्य लीलया शिथिलालयः प्राप्येत इत्यत्र स्वप्ने अपि विश्वसितुम् असमर्थौ आस्ताम्। अस्ताभिलाषिणि दिनकरे तौ मन्दिरं प्राप्तवन्तौ। सर्वत्र अन्धकारः प्रसरन्नासीत्। परं मन्दिरं प्रविश्य तयोः सकलापि आशा प्रणष्टा। ताभ्यां पूर्वं यथा श्रुतम् आसीत् तथा तन्मन्दिरं तु जीर्णम् आसीत्, परं महाराजस्य विक्रमकेसरिणः चिन्तनानुगुणं तस्मिन् सुन्दराणि शिल्पानि, स्तम्भेषु च सुवर्णलेपः नासीत्। समग्रमपि मन्दिरं शिलानिर्मितम् आसीत्। गर्भगृहे कालिमातुः स्वस्थानभ्रष्टः विग्रहः दृष्टः। भित्तीनां कोणेषु पाषाणनिर्मिताः मूर्तयः विकीर्णाः सत्यः पतिताः आसन्। भूकम्पकारणात् मन्दिरमिदं

दासरि सुब्रमण्यम्



नष्टं जातं स्यात् इति ताभ्यां चिन्तितम्। शिथिलालयसम्बद्धं तयो: चिन्तनानुगुणं नैतत् मन्दिरं विद्यते इत्यपि ताभ्यां मतम्।

"विक्रम, यत् अन्वेष्टुं वयम् अत्र आयाता:, नैतत् तत् शिथिलालयमन्दिरम्। तव पितामहेन यस्य मन्दिरस्य विषये श्रुतम् आसीत्, यच्च इभ्यै: वर्णितं, तस्मिन् मन्दिरे नैकै: अद्भुतै: शिल्पै: भवितव्यम्। तथा चास्माभि: एतदपि श्रुतं यत् तस्मिन् मन्दिरे वर्तमान: सुवर्णराशि: स्वतेजसा द्रष्टु: नेत्रे दीपयतीव" शिखिमुखी अवदत्।

विक्रमकेसरी शिखिमुखिन: वचनं शिरश्चालनपूर्वकम् अनुमन्य कालिविग्रहस्य समीपं गत:। तावदेव कश्चन वृश्चिक: तस्य विग्रहस्य पृष्ठत: भित्तिम् अनु पुरस्सरन् आयात:। स: साधारणवृश्चिकस्यापेक्षया आदशगुणितं महान् आसीत्। विक्रम: तं हन्तुं खड्गम् उदयच्छत्। तस्मिन्नेव क्षणे इतोऽपि द्वौ वृश्चिकौ विग्रहस्य पृष्ठत: बहिरायातौ।

अस्मात् व्यापारात् विक्रमकेसरिणं निवर्तयन् शिखिमुखी अवदत्, "विक्रम, एतेषां वृश्चिकानां हननस्य वृथा प्रयत्नं मा कुरु। एष: खलु वृश्चिकद्वीप:। एतान् महाकायवृश्चिकान् हन्तुं वयं प्रयतामहे चेत् अन्यानि आवश्यकानि कार्याणि कर्तुं समयमेव न प्राप्नुम:। कियत: नु वृश्चिकान् हन्म:? अस्माभि: अस्मत्कर्तव्यं न विस्मरणीयम्। अत: चल! आवाम् इत: गच्छाव:" इति।

"सत्यं तव वचनम्। परम् एतेभ्य: वृश्चिकेभ्य: आत्मन: रक्षणं कर्तव्यम् अस्माभि:। यथा आवाभ्यां चिन्तितं तथा नायं शिथिलालय:। किं नु खलु अधुना कर्तव्यम्?" विक्रमकेसरी अवदत्।

शिखिमुखी शिर: अवनमय्य चिन्तयन् मन्दिरात् बहिरायात:। परित: विद्यमानेषु पर्वतेषु दृष्टिं क्षिप्त्वा अवदत्, "वास्तविकस्य शिथिलालयस्य गवेषणार्थं तदस्माभि: एतेषु पर्वतेषु अन्वेष्टव्यं भवेत्। तथापि अस्मिन् गवेषणे अस्माभि: जागरूकै:



भवितव्यम्, अन्यथा वयम् अर्चकस्य कपटजाले पतिष्यामः'' इति।

''शिखिन्! अस्मदागमनात् पूर्वमेव सः अर्चकहतकः एनं द्वीपं प्राप्तवान् स्यात् इति मम तर्कः। किं सः शिथिलालयमपि प्राप्य तत्रस्थानि मूल्यवन्ति वस्तूनि हृतवान् स्यात्?''

तदाकर्ण्य स्मयमानः शिखिमुखी अगदत्, ''अनेन सन्देहेन नात्मा खेदनीयः अस्माभिः। श्वः प्रातः सूर्योदये जाते एव वयं शिथिलालयस्य अन्वेषणम् आरभमहे। तदा यदि सः अर्चकबटुः कुत्रचित् दृश्येत चेत् अनुक्षणं तस्य शिरश्छेदं कुर्याम। अर्चकः पूर्वमेव शिथिलालयं प्राप्तवान् स्यात् इत्यत्र नाहं विश्वसिमि।''

ततः परं द्वावपि नौके प्रति प्रत्यागच्छताम्। तत्र स्थितेभ्यः अनुचरेभ्यः सर्वम् अकथयतां च। तदा नागसोमः अवदत्, यत् ईदृशानि जीर्णानि मन्दिराणि अस्मिन् द्वीपे नैकानि स्युः। पुरा अत्र सहस्राधिकाः इभ्याः वसन्ति स्म। इदानीन्तनस्थितिं तु सः न जानाति इत्यपि सः अवदत्।

भोजनोत्तरं सर्वे निद्रातुं सिद्धाः अभवन्। परितः वर्तमानाः पर्वताः वृक्षाश्च विमलकौमुद्या धवलीकृताः चकासति। जाङ्गलं नौकयोः रक्षकरूपेण योजयित्वा सर्वेऽपि निद्राधीनाः अभवन्।

शिखिमुखी गाढनिद्राम् अन्वभवत्। परम् अकस्मादेव कञ्चन रवं श्रुत्वा सावधानमनाः सः जागृतोऽभूत्। खञ्जन् जाङ्गलः तस्य समीपम् आगच्छन् आसीत्। सः किमपि कपटाचरणं कर्तुम् आयाति इति शिखिमुखी अचिन्तयत्। अतः सः झटिति खड्गहस्तः सन् उत्थितः।

जाङ्गलः क्षणं यावत् आश्चर्यम् अन्वभवत्। ततः स्वस्थो भूत्वा अवदत्, ''शिखिस्वामिन्, भवन्तं हन्तुम् अहम् आयातः इति चिन्तयति भवान्? अद्यापि भवान् मयि शङ्कते इति दृश्यते। अहं तु भवन्तं विपदः पूर्वज्ञानं दातुम् आयातः।''

शिखिमुखी आत्मनः अविमृश्य कृतेन

आचरणेन खिन्नः जातः अवदच्च, ''विपदः रक्षितुम् आगतोऽसि? अपि कश्चन शत्रुः आयातः उत साक्षात् अर्चकः?''

''न जाने, कः आगतोऽस्ति। परं भूमौ निपत्य सावधानमनसा श्रोतव्यम्। चर्मवाद्यानाम् अस्पष्टः ध्वनिः श्रूयते। शृणोतु, इदानीं तावत् इतोऽपि स्पष्टतया श्रूयते सः रवः'' इति वदन् जाङ्गलः समीपस्थान् वृक्षान् प्रति अपश्यत्।

शिखिमुखिना अपि चर्मवाद्यानां ध्वनिः स्पष्टतया श्रुतः। सः उच्चैः अवदत्, ''उत्तिष्ठत! शत्रुः समायातः।''



विक्रमकेसरिणा सह नागसोमादयः शीघ्रम् उत्थिताः। आगच्छन्तीं विपदं ज्ञात्वा सर्वे शस्त्रपाणयः अभवन्। परं तावतैव कालेन आत्रिंशत् जनाः तान् परिवृत्य स्थिताः। तेषु अन्यतमस्य मस्तके वृश्चिकाकारं शिरस्त्राणम् आसीत्। शिरस्त्राणे नेत्रयोः स्थाने रन्ध्रद्वयम् आसीत्, यस्मात् च तस्य पुरुषस्य नेत्रे चकास्तः स्म।

सः शिरस्त्राणधारी स्वहस्तेन शिलानिर्मितं कुठारम् उत्तोल्य तस्य अनुचरेभ्यः अकथयत्, ''रात्रौ स्वप्ने वृश्चिकमात्रा मयि दर्शनं वितीर्य एतानेव जनान् अन्तरा अकथ्यत। एतेषु योग्यं जनं वृश्चिकमात्रे बलिं कृत्वा वयं निरापदं वृश्चिकमातुः मन्दिरं प्रवेष्टुं शक्नुमः।''

'एते विकृताङ्गाः अस्य द्वीपस्य मूलनिवासिनः, अस्यां च परिस्थितौ एतैः सह युद्धम् अपायाय भवेत्' इति शिखिमुखी औहत। यदा सः विक्रमकेसरिणे स्वमतम् अकथयत्, तदा तेनापि तत् अङ्गीकृतम्।

अत्रान्तरे नागसोमः शिखिनः समीपम् आगतः अवदच्च, ''एते यया भाषया भाषन्ते सा भाषा अस्माकम् इभ्यज्ञातेः भाषायाः सादृश्यं भजते। अतः तया भाषया एतैः साकं सम्भाषणम् अस्माकम् उपकाराय भवेत् इति मन्यसे खलु? न वयम् आक्रमणहेतुना एनं द्वीपम् आयाताः, अपि तु प्रभञ्जने निर्मितानां कल्लोलानां प्रहारेण अस्माकं नौके एतं द्वीपम् आयाते इति त्वं तेभ्यः समञ्जनपूर्वकं कथय'' इति शिखिमुखी अवदत्।



वृश्चिकमातुः एव मन्दिरं स्यात् इति मम सन्देहः। श्वः अहं युष्माकं दलं तस्य दलेन सह मेलयेयम्। तदैव वयं जानीमः, किमर्थं यूयम् अत्र आगताः इति। परश्वः पौर्णिमायाम् अहम् उन्मत्तखदिरफलं खादित्वा भूगर्भे गुप्तरूपेण स्थितं तत् मन्दिरम् अन्विष्यामि। तदा युष्मान् सर्वानपि वृश्चिकमात्रे बलिं करिष्यामि।''

तदा शिखिमुखिनि किमपि भाषितुम् उद्युक्ते वन्यनायकः पाषाणकुठारम् उदयच्छत्। ततः सर्वान् बन्दिनः तम् अनुसर्तुम् आदिश्य सः मार्गेण प्रस्थितः।

शिखिमुखिनः तस्य सहचराः च तूष्णीं स्थित्वा अनुसरणेन विना न किमपि मार्गान्तरम् अपश्यन्। शिथिलालयार्चकः तद्वीपम् आगत्य शिथिलालयम् अन्वेष्टुं प्रयतते इति तु शिखिमुखिना निःसन्देहं ज्ञातम्। वृश्चिकज्ञातिनायकस्य कथनात् शिथिलालयः अस्मिन्नेव द्वीपे भूगर्भे विद्यते इत्यपि सः अवगतवान्। परम् उन्मत्तखदिरफलं नाम किम् इत्यपि प्रश्नः तम् आयासयत्।

नागसोमम् अपि सः एव प्रश्नः बाधते स्म। तेन सह चलन्तं वृश्चिकजातीयं सः अपृच्छत्, ''रे मित्र! किमिदम् उन्मत्तखदिरफलं नाम? कुत्र च तत्प्राप्यते? को नु अस्य प्रभावः?''

नागसोमः तेषां वन्यानां नेतारम् उपसृत्य शिखिमुखिनः वचनानुगुणं तस्य समञ्जनं कर्तुं प्रायतत अवदत् च, ''वयं सर्वे समानायामेव ज्ञात्यां प्राप्तजन्मानः। प्रातःकाले वयं इतः प्रस्थानं कुर्मः।''

नागसोमस्य वचनं श्रुत्वा चकितः वन्यनेता अब्रवीत्, ''वयम् इभ्यजातीयाः इत्येषा तु पुरातनी कथा। इदानीं वयं वृश्चिकजातीयाः स्मः। दिनद्वयात् प्राक् कश्चन शिथिलालयार्चकाख्यः पुरुषः द्वीपम् आयातः। सोऽपि अवदत्, यत् इभ्यजातीयः सः शिथिलेश्वर्याः मन्दिरम् अन्वेष्टुम् आगतः। यत् शिथिलेश्वर्याः मन्दिरं सः गन्तुम् इच्छति तत् तु अस्माकं

वन्यः समीपवर्ति पर्वतद्वयं प्रति हस्तनिर्देशं कृत्वा अवदत्, ''खदिर-रसस्य वृक्षाः तस्मिन् पर्वतस्य शिखरे कस्यस्वित् तडागस्य तीरे सन्ति। तत्र द्वित्राः वृक्षाः सन्ति। तस्य वृक्षस्य फलानां खादनेन भूगर्भे वर्तमानं सर्वमपि दृष्टिगोचरं भवति। अस्मन्नायकस्य कथनं त्वया न श्रुतं वा?''

उन्मत्तखदिरफलस्य किंवदन्ती तेन इभ्यनायकमुखादपि श्रुता आसीत्। तत्फलं खादितवान् जनः जगदेतत् अन्यथैव पश्यति। एतत् फलं वृश्चिकद्वीपे एव कुत्रचित् प्राप्यते इत्यपि सः जानाति स्म। परं तत्फलं खादित्वा भूगर्भे विद्यमानं सर्वमपि दृश्यते इत्येतत् तु सः पप्रथमवारमेव अशृणोत्।

येन केन प्रकारेण तदुन्मत्तखदिरफलं हस्तसात् कर्तव्यं येन शिथिलालयस्य स्थानं ज्ञायेत, सर्वा समस्या च नश्येत् इति सः अचिन्तयत्। परं वृश्चिकजातीयानां परोक्षमेव तत्र गन्तव्यम् इत्यपि सः अवगतवान्।

इत्थं चिन्तयति नागसोमे वृश्चिकजातेः नायकः एकस्याः गुहायाः मुखे स्थित्वा अवदत्, ''सर्वे अपि बन्दिनः अद्य रात्रौ अत्र अस्यां गुहायां निद्रां कुर्युः। श्वः प्रातः अग्रिमां सूचनां दास्यामि'' इति उक्त्वा नायकः गुहां प्राविशत्।

शिखिमुखी च तस्य सहकारिणश्च गुहायाः पुरतः विद्यमानस्य वृक्षस्य अधः निद्रां अकुर्वन्। तान् बन्दिग्राहं कृतवन्तः वृश्चिकजनाः पार्श्वस्थान् शिलाखण्डान् आलम्ब्य निद्रिताः शनैः शनैः च निद्राधीनाः



अभवन्।

नागसोम: एनमेव समयम् उचितं मत्वा स्वकार्यसिद्धये गन्तुं सिद्धोऽभवत्। उन्मत्तखदिरफलम् अन्वेष्टुं स्वस्य गमनं शिखिमुखिने निवेदनीयमिति स: अचिन्तयत्। परं शिखिमुखी तत् नानुमन्येत इत्यपि तस्य अभात्। अत: सूचनं विनैव स: मार्जारवत् अश्रूयमाणपदरव: पर्वतस्थं तडागं प्रति प्रस्थित:।

तडागस्य समीपे आगत्य तेन कश्चन वृश्चिकजातीय: उन्मत्तखदिरवृक्षस्य पार्श्वे स्थित: दृष्ट:। तम् अवञ्चयित्वा फलप्राप्ति: अशक्या इति नागसोम: अजानात्। किञ्चित् विमृश्य स: समीपवर्तिन: महत: शिलाखण्डस्य पार्श्वे स्थित्वा शीष्कारम् अकरोत्।

तं रवं श्रुत्वा तस्य उद्गमं ज्ञातुं रक्षक: समीपम् आयात:। नागसोम: पृष्ठत: तस्मिन् उत्प्लुत्य मुखे मुष्ट्या प्राहरत्। तेन रक्षक: नि:संज्ञ: भूत्वा भूमौ न्यपतत्। नागसोम: केनचित् लताखण्डेन तस्य हस्तपादं बद्ध्वा तं शिलाया: पृष्ठत: स्थापयित्वा उन्मत्तखदिरवृक्षं प्रति अधावत्।

नातिचिरेण रक्षक: संज्ञां प्राप्नोत्। स: वृक्षं प्रति अपश्यत्। तेन तत्र नागसोम: दृष्ट:। अत: स: आत्मानं लतापाशात् मोचयितुं प्रायतत। तस्य चेष्टया पार्श्ववर्ती शिलाखण्ड: अचलत्। 'अयं शिलाखण्ड: मयि मा पततु' इति विचारेण स्वशरीरदलनभीतिम् अनुभवन् स्कन्धबलेन तं दूरीकर्तुं स: प्रायतत। शिलाखण्ड: स्वस्थानात् च्युत: सन् चक्रवत् भ्रमन् प्रापतत्। तेन सहैव निराधार: रक्षकोऽपि यत्र शिखिमुख्यादय: सुप्ता: आसन् तस्मिन् पार्श्वे पर्वतम् अधोऽधो न्यपतत्।

*(अनुवर्तिष्यते)*



# महादाता

कस्मिंश्चित् ग्रामे कोऽपि धनिकः आसीत्। सः दीनेभ्यः कदापि किमपि दानं न यच्छति स्म। सः कृपणः इति प्रसिद्धः आसीत्।

एकदा केनापि मनुष्येण धनिकस्य गृहम् आगत्य दानं याचितम्।

"भवतः ग्रामः कः?" इति धनिकः तं पृष्टवान्। 'अयमेव मम ग्रामः' इति सः मनुष्यः प्रत्युक्तवान्।

"कथमेतद् शक्यम्? अस्मिन् ग्रामे सर्वे जनाः जानन्ति यत् अहं दानं न यच्छामि" इति धनिकः अवदत्।

तस्मिन्नेव ग्रामे कोऽपि चर्मकारः आसीत्। यः कोऽपि गत्वा तस्मै किमपि याचते चेत् सः अवश्यं किमपि यच्छति स्म। अतः सर्वे तं 'महादाता' इति मन्यन्ते स्म।

अथ गच्छता कालेन सः धनिकः मृतः। ग्रामवासिनः तस्य मृतदेहं मार्गस्य पार्श्वे भूमौ न्यदधुः। धनिके मृतेऽपि न एकोऽपि ग्रामस्थः अश्रूणि अमुञ्चत।

चर्मकारस्य समीपे याचकाः नियमेन गच्छन्ति स्म। परम् अधुना तेन 'मम समीपे दातुम् किमस्ति?' इति वक्तुम् आरब्धम्।

ग्रामप्रमुखः तं चर्मकारं स्वसमीपे आहूतवान् पृष्टवान् च "त्वं तु महादाता इति प्रसिद्धः असि। परं सहसा भवान् दानं दातुं स्थगितवान् इति श्रूयते अस्माभिः अधुना। किमस्य कारणम्?"

"दानं दातुं मृतधनिकः एव मह्यम् अपारं धनं यच्छति स्म। अहं तं प्रतिश्रुतवान् आसं यत् अहम् एतत् कस्मै अपि न कथयेयम् यत् एतत् सर्वं धनं तस्य अस्ति। अधुना सः मृतः। अहं निर्धनःअस्मि। दातुम् किमस्ति मम समीपे इति चर्मकारः प्रत्यवदत्।





# ब्रह्मदेवस्य सृष्टिः

शुभ्रायां कौमुद्यां पिता सुखासन्दे उपविष्टः आसीत्। तदा तेन एकः श्लोकः श्रावितः ...

वस्तुषु ब्रह्मसृष्टेषु स्थावरेषु चरेषु च
सफलं दृश्यते सर्वं विफलं नैव दृश्यते ।

परितः उपविष्टाः बालकाः एकस्वरेण अपृच्छन् - "तात, कः एतस्य श्लोकस्य अर्थः? वदतु किल!"

"एतस्य श्लोकस्य अर्थं ज्ञातुं इच्छन्ति? श्रुण्वन्तु, ब्रह्मदेवस्य सृष्टौ अचलवस्तूनि नैकानि सन्ति। तथैव चलवस्तूनि अपि बहूनि। किन्तु सर्वेषु एतेषु नास्ति किञ्चिदपि व्यर्थम्। प्रत्येकं वस्तुनः कश्चन उपयोगः अस्ति एव। इत्यस्ति एतस्य श्लोकस्य अर्थः। अवगतः ननु?" पिता अवदत् ।

"तात, कस्य एषा उक्तिः? काञ्चित् कथां कथयतु।" बालकाः कोलाहलम् अकुर्वन् ।

"न कापि नूतना कथा आवश्यकी। एतद्विषयसम्बद्धाम् एव कथां कथयामि अधुना। श्रुण्वन्तु ...." इत्युक्त्वा पिता इमां कथाम् अश्रावयत् ।

"अस्ति अङ्गदेशस्य अङ्गपालो नाम राजा। अपि जानन्ति भवन्तः, सः किम् अकरोत् इति?

विश्वेऽस्मिन् कानि वस्तूनि उपयोगीनि कानि च निरुपयोगीनि इति संशोधनं सः दीर्घकालं यावत् अकरोत्। अन्ततो गत्वा तेन एतत् निश्चितं यत् सृष्टौ मशकान् तथा ऊर्णनाभान् विहाय प्रत्येकं जन्तोः कश्चन उपयोगः भवति एव।

सी. शेषाद्रिः

सः राजा आज्ञापयत् यत् 'राज्ये यत्रकुत्रापि मशकः ऊर्णनाभः वा दृश्येत, सः तत्रैव हन्तव्यः। ते न जीवेयुः' इति।

नगरजनेभ्यः अपि एषा कल्पना अरोचत।

अतः राज्ञः आज्ञां श्रुत्वा ते सर्वे आनन्दिताः जाताः ।

अत्रान्तरे एव किं जातं जानन्ति किम्? अकस्मादेव शत्रुसैन्येन अङ्गदेशे आक्रमणं कृतम्।

अङ्गपालः तु युद्धार्थं न सन्नद्धः। अतः सः कैश्चित् विश्वासपात्रैः सेवकैः सह अरण्यम् आश्रयत्।

तस्यां रात्रौ राजा अङ्गपालः तस्य सेवकाश्च अरण्ये एव निद्रिताः। किन्तु रात्रिसमये मशकैः तेषां निद्राभङ्गः कृतः।

यद्भवति तद् सुखायैव। यतो हि, तस्मिन्नेव काले राज्ञः अन्वेषणार्थं शत्रुः वने भ्रमन् आसीत्।

तद्ध्वनिं श्रुत्वा राजा अचिन्तयत् यत् अत्र निवासः सङ्कटाय कल्पेत्। इति विचिन्त्य सः ततः निर्गत्य एकस्यां गुहायां स्वात्मानम् अगोपयत् ।

प्रातायाम् उषसि शत्रुसैनिकाः राजानम् अन्विष्यन् तस्यां गुहायां प्राविशन्। किन्तु गुहाद्वारे एव ऊर्णनाभानां जालानि आसन्। तानि तैः दृष्टानि। तस्मात् अन्तः कोऽपि स्यात् इति तेषाम् आशङ्का नष्टा एव । जालानि दृष्ट्वा ते ततः एव निर्गताः ।

तदा अङ्गपालेन स्वस्य दोषः ज्ञातः।

मशकैः तस्य निद्रायाः भङ्गं कृत्वा एतत् ज्ञापितं यत् तत्र शत्रूणां भयम् अस्ति ।

ऊर्णनाभैः तु प्राणाः एव रक्षिताः ।

अस्मात् स्पष्टमस्ति यत् ब्रह्मदेवस्य सृष्टौ प्रत्येकस्यैव कश्चन उपयोगः भवति। न किमपि व्यर्थम्'' इति पिता उक्तवान्।






# संस्कार:

**अ**थैकदा सायंकाले लक्ष्मीकान्तः स्वापत्ये अटनार्थं नगरं प्रति नीतवान्। द्वे अपि तस्य अपत्ये 'पानी-पुरी' नामकं स्वादुखाद्यं खादितुम् अभ्यलषताम् । ततः बालौ विपणिं नीत्वा विविधवस्तुक्रयणं कृत्वा ते गृहं प्रस्थिताः। तावता रात्रौ सार्धदशवादनं समयः जातः आसीत्।

किञ्चित् दूरं गत्वा तेषां द्विचक्रिकायानस्य पृष्ठचक्रात् वायुः निःसृतः। समतलं चक्रम् अधुना अकार्यक्षमं सञ्जातम्। चिन्ताक्रान्तः लक्ष्मीकान्तः आलोचयत् "कथं दशकि.मि.यावत् अन्तरं बालौ पद्भ्यां नेतव्यौ?" तदा एव तेन एकं यानसमीकरण-आपणः दृष्टः। तत्रत्यं कर्मचारिणं सः स्वस्य यानं त्वरितं द्रष्टुं प्रार्थयत्। यानस्य समतलं सपाटं वायुरहितं, चक्रं च प्रादर्शयत्। वस्तुतः रात्रौ आपणपिधानस्यैव समयः जातः आसीत्। परन्तु "अकाले अस्मिन् कार्यं स्वीकृत्य अनन्यगतिकात् ग्राहकात् किञ्चिदधिकं धनं स्वीकर्तुं शक्नुयाम्" इति विचिन्त्य सः अङ्गीकृतवान्।

सः समीकारकः कर्मचारी झटिति एव पृष्ठचक्रं यानात् निष्कासितवान्। चक्रं दृष्ट्वा एव तेन ज्ञातं यत् तद् चक्रं सर्वथा जीर्णं चलितुम् असमर्थम् आसीत्। सः चक्रात् नलिकां (tyre-tube) उद्धृतवान्, लक्ष्मीकान्तं च दर्शितवान्। अवदच्च, "महोदय, नैतत् चक्रं शकलेन समीकृतं भवेत्। मया तु नलिका एव परिवर्तितव्या भवेत्।

"अस्तु भवतु, आवश्यकतानुगणं करोतु। परन्तु कृपया नूतननलिकायाः कियत् धनं भवेत् इति सूचयतु।" इति अवदत् लक्ष्मीकान्तः।

"महोदय, उत्तमसंस्थानिर्मिता नलिका चेत्

एम्. लक्ष्मीनारायणः

२०० रूप्यकाणि भविष्यन्ति। तथा च नलिकायोजनस्य ३० रूप्यकाणि अधिकानि भवन्ति। आहत्य २३० व्यय: भवति भवत:'' इति।

आदौ एव विलम्बेन त्रस्त: लक्ष्मीकान्त: एतदपि चिन्तयन्नासीत्, यदेषा एव द्विचक्रिया श्व: अपि तेन कार्यालयं नेतव्या इति। अत: व्ययं सोढवा अपि अद्यैव तेन नूतननलिका क्रेतव्या इति। अत: स: अवदत्, ''अस्तु, भवानेव अस्मिन् विषये निपुण: अत: यद् योग्यं तद् करोतु भवान्।''

अनन्तरं स: स्वस्यूते अपश्यत्। वस्तुक्रयणं कृत्वा अधुना तस्य सविधे केवलं शतं रूप्यकाणि अवशिष्टानि आसन्। अत: स: तं कर्मचारिणम् अपृच्छत् यत् ''समीपे कुत्रापि ATM (धनदकेन्द्रम्) अस्ति वा?'' इति । ''आम्, मुख्यमार्गस्य पुरत: 'सपना' चित्रपटगृहस्य पार्श्वे एव वर्तते एकं ATM केन्द्रम्'' उक्तवान् कर्मचारी।

''अस्तु तर्हि, भवान् नलिकापरिवर्तनम् आरभताम्।'' २० निमेषानन्तरं च किञ्चिद् धनम् आहृत्य प्रत्यागतवान्। तावति काले कर्मकर: अपि समीकरणकार्यं समाप्य यानं सिद्धं कृतवान् आसीत्।

''एतद् ते यानं, महोदय ! सिद्धं कृतम्। स्वीकृत्य गन्तुं शक्नोति भवान्'' इति अवदत् स:। लक्ष्मीकान्त: तस्मै पञ्चशतं (५००) रूप्यकाणां धनपत्रं दत्तवान्। धनपत्रं स्वीकृत्य परिवर्तं दत्तवान् स: कर्मचारी। परिवर्तं गणयन् लक्ष्मीकान्त:




पृष्टवान् ''भो:! कियत् धनं स्वीकृतं भवता?''

तदा स: कर्मचारी ''द्विशताधिकत्रिंशत् रूप्यकाणि (२३०)'' इति झटिति उक्तवान्।

तदा लक्ष्मीकान्त: एवम् अवदत् ''पश्यतु, त्वया मह्यं २७० रूप्यकाणि प्रतिदातव्यानि अभवन्। परन्तु त्वं मह्यं ३७० रूप्यकाणि प्रतिदत्तवान्। शतं रूप्यकाणाम् एकं धनपत्रम् अधिकं दत्तवान् भवान् मह्यम्,'' एवं स्पष्टीकुर्वन् लक्ष्मीकान्त: १०० रूप्यकाणाम् एकं धनपत्रं कर्मकरस्य हस्ते दत्तवान्।

इदृश्या सत्यप्रियतया स: कर्मचारी चकित:। स: मन्दस्वरेण केवलं ''महोदय, धन्यवादा:'' इति वदन् धनपत्रं स्वीकृतवान्।

लक्ष्मीकान्त: अग्रे अभाषत, ''भवन्त: सर्वे श्रमजीविन:। यदि गणनदोषं ज्ञात्वा अपि

अधिकधनं मया मम समीपे स्थाप्यते तर्हि तेन भवत: हानि: जाता स्यात्। तेन प्रमादेन कदाचित् भगवत: रोष: अपि मया सम्मुखीकर्तव्य: भवेत् कदाचित्। स्पृशेदपि इति मम विश्वास:।''

तद् श्रुत्वा कर्मचारिण: नेत्रे अश्रुपूर्णे सञ्जाते द्विचक्रिकाम् आरूढ: लक्ष्मीकान्त: प्रस्थित: एव आसीत् तदा तं स्थगयन् स: कर्मचारी अवदत्, ''महोदय, तिष्ठतु। किं मत्कृते किञ्चित् समयं दातुं शक्नोति भवान्?'' लक्ष्मीकान्त: 'आम्' इति अङ्गीकारं सूचितवान्।

तदा स: कर्मकर: पुनरेकवारं लक्ष्मीकान्तस्य यानस्य पृष्ठचक्रं निष्कास्य तत्र स्थपितां नूतननलिकाम् आकर्षयत्।

तद् दृष्टवा लक्ष्मीकान्त: सम्भ्रान्त:। परन्तु तदा एव स: कर्मकर: आपणात् अन्यां नलिकां आनीय चक्रे योजितवान्। अनन्तरं चक्रे वायुं प्रपूर्य अल्पीयसि काले एव स: यानं पुन: कार्यक्षम कृत्वा लक्ष्मीकान्ताय अयच्छत्।

अनन्तरं अवदत्, ''महोदय, भवान् सत्यप्रियतया शतं रूप्यकाणाम् अधिकं धनपत्रं मह्यं प्रत्यार्पयत्। तद् धनपत्रं यद्यपि मया दोषेण दत्तं तथापि मम हानिविषये पर्याकुल:भूत्वा भवान् स्वयं तद् प्रतिदत्तवान्।

परन्तु मम कृत्यं भवान् न जानाति। आरम्भे अल्पगुणवत्तायुक्ता काचित् नलिका मया अधिकमूल्यं स्वीकृत्य भवते दत्ता।

किन्तु नामङ्कितसंस्थानिर्मिता सा इति वञ्चित: भवान्। परन्तु भवता यद् कृतं तदनन्तरमपि यदि वञ्चयेयं भवन्तं तर्हि रात्रौ मम विवेकबुद्धि: माम् पर्याकुलं कुर्यात् । कृपया क्षन्तव्य: अहम्। इत:परं कस्यापि वञ्चना न करणीया मया, इति दृढं निर्णीतं मया।

कर्मकरस्य निर्व्याजं, निष्कपटं च भाषणं अनपेक्षितम् आसीत्। तस्मिन् जातं परिवर्तनं दृष्ट्वा स: हृष्ट:। स्नेहेन तस्य स्कन्धे चपेटां दत्त्वा स: तम् आपृष्टवान्।

बालयो: कृते अयं मूल्यसंस्कारस्य वस्तुपाठ: एव जात:।



# अहं कः भवेयम् ?

**य**दि क्रीडामृगेषु (Pets) भवतां प्रीतिः, यदि सर्वे पशवः खगाः च भवतां प्रियाः, यदि तेषां पालनं भवतां मोदाय, तर्हि एषः लेखः भवतां कृते वर्तते। क्रीडामृगाणां विषये महत्त्वपूर्णमिदं यत् तेषां प्रशिक्षणम् आवश्यकं, कथं वर्तितव्यमिति ते शिक्षितव्याः। विनीतः क्रीडामृगः स्वामिनः मोदपात्रं भवति। क्रीडामृग-विनयनम् (Pet-Trainer)अन्यापेक्षया नूतना वृत्तिः। क्रमेण विस्तारं गच्छन्त्याः अस्याः उपजीविकायाः उत्तरापेक्षापि उज्ज्वला।



आदौ एतत् स्मर्तव्यं यत् प्रशिक्षणं नाम सेवापरः व्यवसायः । अस्मिन् कार्ये प्रायः क्रीडामृगाणां स्वामिभिः सह व्यवहारः करणीयः । अन्यशब्देषु, पशुभिः सह परस्परक्रिया भवति चेदपि प्रथमतः जनैः सह एव व्यवहरणीयम्। व्यवसाये अस्मिन् येषां नितान्तं अनुरक्तिः तैः एव सः अनुसर्तव्यः । क्रीडामृग-विनयनम् अद्यापि क्रमेण विस्तीर्यमाणः व्यवसायः । सम्प्रति विनेतारः बहुशः स्वयं शिक्षिताः । ते पशूनाम् आचरणपरिवर्तनं, श्वव्यवहारविज्ञानम् इत्यादिविषयेषु विपुलं वाचनं कुर्वन्ति, व्याख्यानानि शृण्वन्ति, कार्यशालासु प्रसभासु च उपतिष्ठन्ते, कदाचित् अन्येभ्यः क्रीडामृगविनेतृभ्यः शिक्षन्ते च।

प्रथमतः सर्वविधेषु प्राणिषु प्रेमभावः अत्यावश्यकः । क्रीडामृगाणां विविधाः जातयः, व्यक्तिताः, प्रकृतयः च भवन्ति । तैः सह व्यवहारक्षमता आवश्यकी । नैकविधैः जनैः सह सम्भाषणसामर्थ्यम् । परिस्थितिं निर्धार्य यथाकालं वर्तनम् । व्यवसायविषये अगाधं ज्ञानं, सततम् अध्ययनस्य इच्छा च। निपुणः क्रीडामृग-विनेता भवितुम् एते गुणाः अत्यावश्यकाः । साम्प्रतम् आस्माकं देशे कस्मिन्नपि महाविद्यालये क्रीडामृग-विनयनम् इति विद्योपाधिः न प्रदीयते ।

नैके क्रीडामृग-विनेतारः स्वयम् अधिकृताः भवन्ति अथवा ते लघुव्यवसायिभिः सह कार्यं कुर्वन्ति । कदाचित् अन्ये क्रीडामृगसम्बन्धिनः उद्योगाः अपि तान् कार्ये नियोजयन्ति यथा पशुवैद्याः, पशु-आश्रयाः, पशुपालकाः , पशु-आपणाः च। क्वचित् स्थानीयाः नागरिक-क्रीडाविभागाः, क्रीडासंकुलाः, अन्ये सामाजिक-संघाः वा तान् वेतनेन गृह्णन्ति । जीवने क्रीडामृगस्य महत्त्वपूर्णं स्थानं भवति इति मतं शनैः वृद्धिं गच्छत् अस्ति । तेन सह क्रीडामृग-विनेतृणाम् आवश्यकता अपि वर्धमाना अस्ति । विशेषतः श्वविनेतारः सुरक्षासेनायां, नगररक्षणगणे इत्यादिषु अधिक्रियन्ते । केचन पूर्णकालकर्मणि नियुज्यन्ते केचन च अंशकालिकं कार्यं कुर्वन्ति । यथास्थानं केभ्यश्चित् क्रीडामृगस्वामिभ्यः ते उत्तमं वेतनमपि लभन्ते । व्यापारिकम् उपाधिम् अनुभवं च प्राप्य क्रीडामृग-विनेतारः स्वव्यवसायमपि कर्तुं शक्नुवन्ति ।

*- साइ*

# चन्दमामायाः कथा

अस्मिन् जुलैमासे चन्दमामायाः षड्षष्टितमे वर्षे प्रवेशः भविष्यति। तदर्थं जनानां पुरतः स्थापयितुम् इच्छामः प्रथमं मुखपृष्ठं यत् प्रकाशितम् आसीत् जुलैमासस्य सप्तचतुर्नवैकतमे ख्रिस्ताब्दे। भवद्भिः द्रष्टुमपि शक्यते तस्याः सञ्चिकायाः मूल्यं मुखपृष्ठे षड् आणे इति।

श्री. चक्रपाणिमहोदयैः श्री. नाग्गी रेड्डी महोदयैश्च बालकानां कृते मासिकं प्रकाशितमासीत् इदृशैः प्रगल्भैः विचारै यत् कथमाध्यमेन भारतीयबालकेभ्यः अस्य देशस्य दायसंस्कृतिविषये किमपि ज्ञानं दातव्यम्। एतदर्थं चन्दमामया तेलूगू-तमिल इति बहुजनानां भाषाद्वयेन आरम्भः कृतः ख्रिस्ताद्बस्य सप्तचतुर्नवैकतमे वर्षे। अनन्तरं चतुर्षु वर्षेषु इतोऽपि षट्सु भाषासु चन्दमामायाः प्रकाशनं जातम्। अधुना तु द्वादशभारतीयभाषासु आङ्ग्लभाषास्वपि चन्दमामायाः प्रकाशनं भवति।

अस्मिन् ६६तमे सांवत्सरिके वर्षे, अस्माकं पूर्वसूरीनां प्रगल्भविचारान् स्मर्तुमिच्छामः। अपि च पुनरेकवारं अत्र अस्माभिः प्रतिज्ञा एव करणीया यत् चन्दमामा नित्यं समाजप्रबोधनं करिष्यति। भारतीययुवकान् ईदृक् समर्थान् करिष्यति येन ते समाजदायित्वभारं वोढुं समर्थाः भविष्यन्ति। तथा च ते स्वसंस्कृतिविषये ज्ञास्यन्ति। तस्मिन् विषये नितराम् अभिमानं धारयिष्यन्ति। वयं प्रत्येकं भारतीयकुटुम्वं सेवितुमिच्छामः।



तत्रस्थान् प्रौढजनान् वक्तुम् इच्छामः यत् तेषां बालकानां हस्ते यदि चन्दमामा भवेत् तर्हि ते निश्चिन्ततया स्थातुं शक्नुवन्ति। यतः बालाः अन्यविषयान् चिन्तयितुमपि न इच्छेयुः। बालकानपि वयं वक्तुमिच्छामः यत् वयं तु तेषां मित्राणि येन ते सम्यक् वर्धिष्यन्ते।

अस्माभिः चिन्तितं यत् कथमेतद् साम्राज्यं निर्मितं? विषयेऽस्मिन् किमपि वक्तव्यम्। तद् आवश्यकमेव। अधुना अधस्तात् कानिचन चित्राणि द्रष्टव्यानि। तत्र कार्यालयः, कर्मचारी कक्षः, ..प्रकाशनविभागः दृश्यते। कर्मचारिणाम् चित्राणि सन्ति यैः स्वजीवनं दत्तं चन्दमामायाः कृते। शीघ्रमेव ऑगस्टमासे अन्यविशेषमुखपृष्ठेन सह मिलामः अस्माकं स्वातन्त्र्यदिनमहोत्सवे। ***- सौम्याभारद्वा***











# चन्दमामीया सामान्यज्ञानपरीक्षा - ४२

*(ऊनषोडशवर्षीयाणां कृते)*

**समुचितोत्तरदाता अर्हति ₹२५०/- पारितोषिकत्वेन***

***एकाधिकजना: यदि शुद्धम् उत्तरं प्रेषयेयु:, तर्हि प्रतिजनं ₹५०/- दास्यन्ते पारितोषिकत्वेन।**

**अधोक्तं क्रियतां भवद्भि:-**

१. उत्तराणि समपत्रे लेखनीयानि।
२. नाम, वय: सङ्केत: (पिन् कोड्सहित:) प्रेषणीय:।
३. पिहितपत्रे **चन्दमामीया सामान्यज्ञानपरीक्षा - ४२** इति लेखनीयम्।
४. ३१ अगस्त पूर्वं भवदुत्तराणि अस्माभि: प्राप्तानि भवेयु: तथा तानि प्रेषणीयानि।
५. २०१२ तमवर्षस्य अक्टूबरमासीये अङ्के परिणाम: प्रकाशयिष्यते।

## भारतीय: वस्त्रोद्योग:



१. लखनौ नगरे किं प्रसिद्धं तन्तुकार्यं विद्यते?
२. कर्नाटकराज्यस्य कस्मिन् प्रदेशे कौशेयवस्त्रं निर्मीयते?
३. 'फुलकारी' इति सूचिकर्मतन्त्रे किं राज्यं प्रवीणम्?
४. भारतस्य कानि राज्यानि 'बांधणी' कलाकौशले प्रसिद्धानि?
५. 'कलमकारी' कलाप्रकारार्थं किं राज्यं प्रसिद्धम्?
६. 'इकट' शैल्या तन्तुवयनं भारतस्य कस्मिन् प्रदेशे भवति?
७. पैठणीशाटिका निर्माणं कस्य राज्यस्य वैशिष्ट्यम्?
८. तामिळनाडूत: किं नगरं ''कौशेयनगरम्'' इति प्रसिद्धम्?

**चन्दमामीया सामान्यज्ञानपरीक्षा-३९ अप्रैल २०१२ उत्तरम्**

१. मिल्खासिंग: २. धनराज: पिल्लै ३. गीत सेठी ४. एस्. रॉबिन्सन ५. कामाम् मल्लेश्वरी ६. विश्वनाथ- आनन्द:

*April'12 Winners:* 1. Sivalenka Chandrasekhar, Mehdipatnam, Hyderabad - 500028.
2. Yagnesh Saradchandra Chaphalkar, Pakhal Road, Nasik - 422006.
3. B.K.Anujith, Kulithurai(Post), Kanyakumari(Dist) - 629163.



# हस्यताम् उदरोपपीडम्



*पर्यटकः* - कस्य तत् कपालम् ?

*श्रान्तः निर्देशकः* - श्रीमन्, तत् जूलियस्-सीजर-महोदयस्य कपालम्।

*पर्यटकः* - तर्हि तस्य समीपस्थं लघु कपालम् कस्य ?

*श्रान्तः निर्देशकः* - तत् श्रीमन्, बाल-जूलियस्-सीजरस्य कपालम्



*मार्टिनः* - वैद्याः परिचारिकाः च मुखावगुण्ठनं किमर्थं धारयन्ति?

*जोनः* - यतः कस्यापि प्रमादः भवति चेत् सः केन कृतः इति कोऽपि न ज्ञास्यति।



*शिक्षिका* - गोपाल, पर्यटनविषये त्वया लिखितः निबन्धः तव यमल-भगिन्याः निबन्धसमः एव अस्ति।

*गोपालः* - आचार्ये, पर्यटनस्थलं तदेव आसीत् खलु !



*माता* - तुलसि, तव मुखं किमर्थं रक्तवर्णम् ?

*तुलसी* - अहं कलहं शमयितुं मार्गे धावितवती ।

*माता* - तद् अतीव शोभनम्। कः कलहं कृतवान् ?

*तुलसी* - राहुलः च अहं च ।



*क्रीडाप्रशिक्षकः* - राजेश, त्वया उत्तमरीत्या क्रीडितम् ।

*राजेशः* - आर्य, अहं मन्ये मम क्रीडा असमीचीना आसीत् ।

*क्रीडाप्रशिक्षकः* - त्वया तु प्रतिपक्षस्य कृते उत्तमं क्रीडितम् ।

रोहनः आक्षेपं कुर्वन् गृहमागतवान् यत् घण्टां यावत् याने प्रत्यक् उपविश्य कृतेन प्रवासेन सः अस्वस्थः जातः इति ।



''तव सम्मुखम् उपविशन्तं जनं प्रार्थ्य स्थानपरिवर्तनं किमर्थं न कृतम्?'' इति तस्य जननी पृष्टवती ।

''तत् कथं शक्यम् इति मम पुरतः कोऽपि उपविष्टः नासीत्'' सः उक्तवान।

# 'सॅण्डविच्' खाद्यस्य इतिहास:





सॅन्डविचानि नाम किमपि नूतनं खाद्यम् वा? खिस्ताब्दस्य प्रथमे शतके, हिलेल-द-एल्डर नाम ज्यूधर्मपरायण: नेता मॅट्झो 'पासोव्हर' उत्सवसमये ब्रेडमध्ये पास्कल लॅम्ब तिक्तौषधय: मूलानि च स्थापयित्वा खादितुम् आरब्धवान्।



अस्य उपाहारस्य नामकरणार्थं जॉन मॉण्टॅग नाम चतुर्थ इर्ल ऑफ सॅन्डविच महोदय: उल्लेखनीय:। एक: अत्यासक्त: कितव: भोजनार्थं विशेषसमयं व्ययीकर्तुं न इच्छति स्म। अत: एकदा स: ब्रेडखण्डयोर्मध्ये एकं मांसखण्डं स्थापयित्वा आनेतुम् सेवकम् आज्ञापयत्। तेन तस्य द्यूतक्रीडाऽपि न खण्डिता भवेत्। तथा च अनन्तरं हस्तप्रक्षालनार्थमपि समययापनं न भवेत्।



यद्यपि महोदयस्यास्य नाम्नैव खाद्यनाम जातं तथापि मूलसंकल्पना अस्य नास्ति। एकदा भ्रमणार्थं स: पौर्वात्यमध्यप्रदेशं गत: तदा ग्रीकजना: तथा तुर्कजना: पीटा ब्रेड तथा सॅन्डविच भुञ्जते परिवेशयन्ति च इति तेन दृष्टम्। तत: तामेव कल्पनामनुसृत्य तेन एतादृशस्य खाद्यपदार्थस्य याचना कृता।



'मफ्युलेटा सॅन्डविच' इति इटली विशेष-खाद्यम्। अस्मिन् वराहोरु:, इटालियन सलामी, चीजम्, ऑलिव्ह कृशम्बरी चूर्णीकृता शुण्ठी च वर्तते। 'सॅन्डविच्' इति खाद्यं कुत: आगतम्। सिसिलियनपद्धत्याम्, कृषका: वराहोरुं,चीजम्, ब्रेडं च विभक्तम् खादन्ति स्म। तत्‌तु बॅरेल अथवा क्रेटस् प्रकारस्य खाद्यस्य उपरि उपविश्य खादन्ति स्म। धान्यविक्रेता एकदा सर्वमेकत्रीकृत्य मफ्युलेटा ब्रेडखण्डयोर्मध्ये स्थापितवान् तस्य क्रेत्रे च दत्तवान्। तत् साक्षात् तस्य क्रेतृषु प्रियं जातम्।



पेन्सिल्वानिया इत्यत्र ब्रेडखण्डयोर्मध्ये मांसं, पालाण्डुः चीज् च स्थापयित्वा यत् चीज् स्टीक क्रियते तत् बहु प्रसिद्धम् अस्ति। शून्यत्रिनवैकतमे शतके हॉटडॉग इति खाद्यक्रयेण श्रान्त्वाः जामितौ भ्रातरौ स्वभोजनार्थे किमपि नूतनखाद्यं कर्तुं निश्चितवन्तौ। ताभ्यां पलाण्डुः दग्धं गोमांस कृतम्। यावत् तौ खादितुं आरम्भं कुरुतः तावत् एकः यानचालकः तदेव खादितुम् अयाचयत। अहो आश्चर्यम्! तस्मै तत् बहु अरोचत। तेन तु द्वाभ्यां कथितम् 'हॉटडॉग' विहाय एतदेव क्रीणतु' इति।



एल्विस प्रेस्ले नाम प्रसिद्ध-पॉपगायकस्य प्रिय सॅन्डविच् किमस्ति जानन्ति वा? दग्धं कलाय-नवनीतं कदलीं च सूकरमांसेन सह सॅन्डविचमध्ये खादति स्म सः।



यदा फिलिप मॅथ्यू रक्षकस्यकृते सॅन्डविच् कुर्वन्नासीत् तदा अनवधानेन तेन फ्रेञ्चब्रेडखण्डं गोमांस-क्वथन-कुसूले क्षिप्तम्।



समयाभावात् तेन नूतनं भिन्नं सॅन्डविच न कृतम्। यदासीत् तदेव दत्तम्। रक्षकाय तत् बहु अरोचत्। तेन स्वमित्राणि अपि तदेव खादितुम् सूचितम्।



"कॅनडा तथा अमेरिकादेशे सब्मरीन सॅन्डविच् एषः प्रकारः प्रियः। बोस्टनमध्ये यत् सॅन्डविच् कृतं ततः अस्य नाम आगतम्। प्रथमजागतिकयुद्धसमये बोस्टनमध्ये वैमानिकान् आकर्षयितुं समुद्रवाहिनी-सदृशांनि सॅन्डविचानि कृतानि आसन्। तेषु मांसं, शाकानि, चीजं, (सॉसानि) रसापाचकं च आसन्।



सॅन्डविचं करणस्य भारतीयानां तु भिन्ना एव पद्धतिः। अत्र चिकन-टीका, वार्तकी अवलेहं, पनीरं, आम्रावलेहं इत्यादयः रुचिराः पदार्थाः युज्यन्ते।



# वर्ध्यताम् शब्दसम्पत्तिः

कति भारतीयाः भाषाः ज्ञायन्ते भवद्भिः ? अधुना चन्दमामा-साहाय्येन भारतीयाः भाषाः पठित्वा कामं भारतभ्रमणं क्रियताम् । अधस्तनं शब्दपटं दृष्ट्वा स्वभाषायां वाक्यं पठन्तु। अनन्तरं निर्देशानुसारं तदेव वाक्यम् अन्यासु भाषासु कथं वक्तव्यम् इति अवगच्छन्तु ।





| English | No tickets available. | The photography is good. |
|---|---|---|
| Sanskrit | चीटिकाः न उपलब्धाः। | चित्रीकरणं सम्यक् आसीत्। |
| Telugu | టిక్కెట్లు అందుబాటులో లేవు.<br>तिक्केत्लु अन्दुबातुलू लीवु. | ఫోటోగ్రఫీ బాగుంది.<br>फूतोग्रफ्य बागुन्दि. |
| Tamil | அனுமதி சீட்டுகள் இல்லை.<br>अुमथि सीतुगल इलै. | புகைப்படக் காட்சிகள் நன்றாக இருந்தன.<br>पुगैप्पद कात्छिगल नन्राग इरुन्थन. |
| Bengali | টিকিট ছিল না।<br>तिकित छिहलो ना. | চিত্রগ্রহনটা ভালো।<br>व्हित्रोग्रहोता भालो. |
| Marathi | तिकिटं उपलब्ध नव्हती.<br>तिकिट उपलब्ध नव्हती. | छायाचित्रण खूपच सुरेख होतं.<br>छायाचित्रण खूपचं सुरेख होतं. |
| Kannada | ಟಿಕೆಟ್ ಸಿಗುತ್ತಿಲ್ಲ<br>तिहे त सिगुत्तिल्ल. | ಛಾಯಾಗ್ರಹಣ ಚೆನ್ನಾಗಿದೆ.<br>छ्छायाग्रहण छेन्नागिडे |
| Odia | ଟିକେଟ୍ ମିଳିଲା ନାହିଁ।<br>तिच्केत मिलिला नाहिं. | ଫଟୋଗ୍ରାଫି ଖୁବ୍ ସୁନ୍ଦର ହୋଇଛି।<br>फोटोग्राफी खुप सुन्दर होइछि. |
| Gujarati | ટિકિટ ઉપલબ્ધ નથી.<br>तिकिट उपलब्ध नथी. | ફોટોગ્રાફી સરસ છે.<br>फोटोग्राफी सरस छे. |
| Assamese | কোনো টিকেট নাছিল।<br>कुनु तिकेट् नासिल. | ফটোগ্ৰাফি ভাল আছিল।<br>फोटोग्राफी भाल आसिल. |
| Malayalam | ടിക്കറ്റ് കിട്ടാനില്ല.<br>तिच्केत कित्तनिल्ल. | ഫോട്ടോഗ്രാഫി നന്നായിരുന്നു.<br>फोटोग्राफी ननायिरुन्नु. |
| Santali | ᱴᱤᱠᱤᱴ ᱵᱟᱝ ᱧᱟᱢᱚᱜ ᱠᱟᱱᱟ।<br>तिकिट् बंग नमोग कन. | ᱯᱷᱚᱴᱚ ᱠᱟᱢᱤ ᱫᱚ ᱵᱮᱥ ᱟᱠᱟᱱᱟ।<br>फोटो कमि दो बेस अकन. |
| Hindi | टिकट उपलब्ध नहीं थे।<br>तिकिट उपलब्ध नही थी। | फ़ोटोग्राफ़ी बहुत अच्छी है।<br>फोटोग्राफी बहुत अच्छी हैं। |





| English | The story is ordinary. | Hero's acting is fantastic. |
|---|---|---|
| Sanskrit | कथा तु सामान्या आसीत्। | नायकस्य अभिनय: उत्तम:। |
| Telugu | కథ సాదాసీదాగా ఉంది.<br>कथ सदसीदाग वुन्दि. | హీరో నటన అద్భుతం.<br>हीरो नतन अद्भुतम. |
| Tamil | கதை சுமார்.<br>कथै सुमार. | கதாநாயகன் அருமையாக நடித்தார்.<br>कथथानायकन अरुमैयाग नदिथथार. |
| Bengali | গল্পটা মামুলী।<br>गल्पता मामुलि. | নায়কের অভিনয় অসাধারন।<br>नायोकेर अभिनोय अशाधारोन. |
| Marathi | कथानक एकदम साधारण होतं.<br>कथानक एकदम साधारण होतं. | नायकाचा अभिनय अप्रतिम होता.<br>नायकाचा अभिनय अप्रतिम होता. |
| Kannada | ಕಥೆ ಸಾಮಾನ್ಯವಾಗಿದೆ.<br>कथे सामान्यवागिडे | ಹೀರೋ ನಟನೆ ಅದ್ಭುತವಾಗಿದೆ.<br>हीरो नतने अद्भुतवागिडे. |
| Odia | କାହାଣୀଟି ସାଧାରଣ।<br>काहानिति साशारण. | ନାୟକଙ୍କର ଅଭିନୟ ଚମତ୍କାର।<br>नायाकनक अभिनय चमत्कार. |
| Gujarati | વાર્તા સાધારણ છે.<br>वार्ता साधारण छे. | નાયકનો અભિનય અદ્ભુત છે.<br>नायकनु अभिनय अद्भूत छे. |
| Assamese | কাহিনীটো সাধাৰণ আছিল।<br>काहिनितु क्षधरन आसिल. | নায়কৰ অভিনয় সুন্দৰ আছিল।<br>नायाकोर अभिनय क्षुन्दोर आसिल. |
| Malayalam | കഥ സാധാരണമായ ഒന്നായിരുന്നു.<br>कथा साधारननमय ओन्नयिरुन्नु. | നായകന്റെ അഭിനയം നന്നായിരുന്നു.<br>नायकान्ते अभिनयम नन्नायिरुन्नु. |
| Santali | [illegible]<br>कहानी दो जह लेकन. | [illegible]<br>हिरो पत अदि बेस अकन. |
| Hindi | कहानी साधारण है।<br>कहानी साधारण हैं। | हीरो का काम अच्छा है।<br>हिरो का काम अच्छा हैं। |

## मशकान् निराकारयति पेप्परमिन्टस्



**भा**रतस्य राजधान्याः देहलीतः 'पद्मा वासुदेवन्' इत्यनया वैज्ञानिकया कृतमेकं महत्त्वपूर्णं संशोधनम्।

भारतीय-प्रौद्योगिक-संस्थाने स्थितेन तस्याः संशोधकानां सङ्घेन अन्विष्टं दृष्टं च यत् पेप्परमिण्ट्-तैलं मशकान् निराकारयति। तत्तैलं मशकानां पिण्डमपि नाशयितुं समर्थम्। ('पिण्डम्' नाम पक्षहीनरूपम् यद् कीटकाण्डकेभ्यो निर्गच्छति।) सर्वासु वार्तासु सुखदा वार्ता यत् ॲनोफिलिस् मशकं नाशयितुं यः (मशकः) मलेरियारोगं प्रसारयति एतत् तैलम् अतीव प्रभावशालि अस्ति।

वैज्ञानिकैः आकर्षकः प्रयोगः कृतः। प्रथमं तैः 'मेन्था पिपेरिटा' नाम तैलं पेप्परमिण्ट्-ओषधेः निष्कासितम्। ततः तैः किञ्चित्तैलं मशकपिण्डयुक्तजले प्रक्षिप्तम्।

अन्येद्युः पिण्डानि नष्टानि इति तैः ज्ञातम्। बहवः जनाः तैलस्य मशकनिराकरणसामर्थ्यं परीक्षितुम् अन्वमन्यन्त। शरीरे तैलं विलेप्य ते गृहात् बहिः निद्रिताः। अशीति-प्रतिशतं जनाः उक्तवन्तः यत् तैः मशकदंशाः न अनुभूताः।

## महिलाः निर्मान्ति रुधिरागारम्



**प**रप्पाग्रामतः एक महिला अतीव अस्वस्था जाता। तस्याः अत्यधिकरक्तस्रावः जातः। ग्रामस्थाः तां ४० कि.मी. दूरस्थितं रुग्णालयं नेतुं वाहनम् अन्विष्टवन्तः। दैववशात् सा महिला मृत्युं न प्राप्ता। वैद्येनोक्तं यत् 'तस्याः जीवितं तु दैविचमत्कारः एव। यतः रक्तस्रावः अधिकः जातः।

एतस्मात् अनुभवात् परप्पाग्रामस्य महिलाः कार्यसिद्धाः जाताः। केवलं भाग्याधीनैः न भवितव्यम् इत्यनेन विचारेण ताभिः स्वग्रामे रक्तदातृणां गणः निर्मितः। तस्य सङ्घस्य नाम 'महिला रक्तदातृणां सङ्घः' इति। केरलप्रान्ते एव पप्रथमतया एतादृशः सङ्घः निर्मितः अस्ति। एतस्य नियोजनं सर्वं 'सहाय्य सङ्घः' इत्यनया संस्थया क्रियते।

अधुना महिलाः रक्तदातृणां सङ्घस्य द्विशत-स्वयंसेवकाः सन्ति। येभ्यः प्रायः धनहीनाः कृषिकर्मचारिणः गृहिण्यः च। एतस्य कार्यस्य विस्तारम् उत्तरकेरलप्रान्तस्य सम्पूर्ण-गिरिप्रान्तपर्यन्तं कर्तुं सङ्घस्य सङ्कल्पः अस्ति।

# चित्रमञ्जूषा

अस्मिन् मासे दक्षिणभारतस्य मन्दिराणां चित्रैः चित्रपुस्तिकां निर्मास्यामः।



रामेश्वरम्, तमिलनाडुः



थंजावुर मन्दिरम्, तमिलनाडुः



गोमतेश्वरमन्दिरम्, कर्नाटकतप्रान्तः



तिरुपतिमन्दिरम्, आन्ध्रप्रदेशः



वृषभमन्दिरम्, कर्नाटकप्रान्तः



चोट्टानिक्करमन्दिरम्, केरलप्रान्तः

